श्रीमद्वल्लभाचार्य प्रणीत

# श्री ब्रह्मसूत्राणुभाष्य चतुर्थाध्याय सानुवाद

कृष्ण भक्ति प्रचाराय धर्मरक्षण तत्पराम्।
तत्रत्यां विश्वविख्यातां वन्दे गुरु परम्पराम्।।
तत्रादौ वल्लभाचार्य सर्वाचार्य शिरोमणिम् ।
जगद्वन्द्य महात्मानं देशिकं प्रणमाम्यहम्।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

# श्री विट्ठलनाथ जी (श्रीगुसांई जी)

श्रीमद् विठ्ठलनाथश्च गुसांईजी त्युपाह्वयम्।
वन्दनीय महात्मानं धर्माचार्यं नमाम्यहम्।।
(विठ्ठलवाच्य शब्द में तीन अक्षर हैं। `विद्' `ठ' `ल'
विद् अर्थात् विदा-ज्ञान के द्वारा, ठान् अर्थात् शून्यान्- शून्य को- अज्ञान को `लाति'
दूर करे, अपना दास बनाकर स्वीकार करे वह विठ्ठल ) `यथा नाम तथा गुण'

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

जगद्गुरु
श्रीमद्वल्लभाचार्य वंशावतंस
आचार्यवर्य्य गोस्वामि तिलकायित
श्री१०८ श्री इन्द्रदमन जी (श्री राकेश जी ) महाराज

नाथद्वारा

जन्मतिथि फाल्गुन शुक्ल ७
विक्रम संवत् २००६

प्राकट्य
२४ फरवरी सन् १९५०

सर्वसद्गुणभूर्धीमान् करूणावरूणालयः।
श्रीमद् राकेश आचार्यः शरणं नः सदा गुरुः ।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

# दैन्याष्टक का अर्थ

अर्थ - हे गोकुल के स्वामी, श्रीनन्दरायजी के पुत्र ! श्री यशोदाजी के गर्भ से प्रकट होने वाले श्रीकृष्ण ! मुझ दीन पर कृपा कीजिये ।।1 ।। व्रज के आनन्द स्वरूप ! व्रज मे निवास करने वाले, व्रज की स्त्रियों के हृदय में विराजमान ! व्रज मे नित्य लीला करने वाले श्रीकृष्ण ! मुझ दीन पर कृपा कीजिये ।।2 ।। नाम और लीला के विलास के लिये श्रीमद् भागवत के भावार्थ रूप में प्रकट होने वाले, रसिक स्वरूप नाम लीला विलासी हे श्री कृष्ण ! मुझ दीन पर कृपा कीजिये ।।3 ।। हे यशोदा जी के हृदय को प्रुफुल्लित करने वाले, श्री नन्दजी के आंगन मे भांति-भांति की क्रीडा करने वाले तथा घुंघराले बालो से घिरे हुए मुखार विन्द वाले श्री कृष्ण ! आप मुझ दीन पर कृपा कीजिये ।।4 ।। हे विरह के क्लेश को सह लेने वालों, आत्म स्वरूप ! यशगान में प्रीति रखने वाले, अत्यन्त अधिक दीनता दिखाने वाले भक्त पर दया करने वाले श्रीकृष्ण ! आप मुझ दीन पर कृपा कीजिये ।।5 ।। अत्यधिक भक्ति करने वाले, भक्तों पर विशेष आसक्त होने वाले स्वार्थहीन भक्ति से विशेष प्रसन्न होने वाले, असीम आनन्द के समूह स्वरूप हे श्रीकृष्ण ! मुझ दीन पर कृपा कीजिये ।।6 ।। शुद्ध हृदय वाले, भक्तों के अधीन होने वाले अत्यन्त वियोग स्वरूप श्री हरि ! मुझ दीन पर दया कीजिये ।।7 ।।
श्रीमान् आचार्य जी के हृदय में सर्वदा सैकडों नित्य लीला करने वाले, हे भगवान् श्री कृष्ण ! सभी प्रकार से शरण में आये हुए मुझ दीन पर दया कीजिये ।।8 ।।

इति श्री हरिरायजी विरचितं दैन्याष्टकम् सम्पूर्णम् ।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

# श्री ब्रह्मसूत्राणुभाष्य चतुर्थाध्याय सानुवाद

श्री नाथद्वारस्थ विद्याविलासि गोस्वामि तिलकायित
श्री१०८ श्रीइन्द्रदमनजी (श्रीराकेशजी) महाराज श्री की
आज्ञा से प्रकाशित


अनुवादक, संशोधक एवं सम्पादक
यदुनन्दन त्रिपाठी नारायणजी शास्त्री
विद्याविभागाध्यक्ष, मन्दिर मण्डल नाथद्वारा



प्रकाशक
श्री विद्याविभाग, मन्दिर मण्डल नाथद्वारा


श्रीमत्प्रभुचरण श्री विठ्ठलनाथजी (श्रीगुसांई जी)
के पंचशताब्दी वर्ष के प्रारम्भ दिवस पर

पौष कृष्ण ९ मंगलवार
दिनांक १६.१२.२०१४


प्रथम संस्करण
प्रति ५००
संवत् २०७१

न्योछावर
८० /-


CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

# सम्पादकीय

श्रीशंकराचार्यादि पूर्वाचार्यों ने उपनिषद्, गीता और ब्रह्मसूत्र पर भाष्यों की रचना की है परन्तु उन्होंने श्रीमद्भागवत महापुराण की उपेक्षा की है । भगवान् के आनन्दस्वरूप और उनकी विविध लीलाओं का वर्णन करने वाले भागवत जैसे उत्तम पुराण ग्रंथ के रहस्य को प्रकट करने की आज्ञा श्रीमद्वल्लभाचार्य महाप्रभु को हुई । इस कारण आपने श्रीमद्भागवत को अधिक महत्व दिया ।

'वाक् एव ब्रह्म' ये स्वयं वैश्वानर वाक्पति हैं और इनकी वाणी भगवद् स्वरूप है । इनके साहित्य के अध्ययन अध्यापन से भगवद् प्राप्ति होती है तथा आप श्री के साहित्य का प्रचार-प्रसार करना वल्लभ प्रभु की नामात्मक सेवा है । यह सेवा आप श्री की कृपा से ही संभव है ।

आचार्यश्री ने इस ब्रह्मसूत्राणु भाष्य में वैचारिक एवं दार्शनिक विश्लेषण को संपादित किया है । इस साहित्य से वैष्णव सृष्टि श्रीवल्लभीय दिव्य वाणी से आप्लावित होगी ।

अणुभाष्य का चतुर्थाध्याय सानुवाद पूज्यपाद् आचार्यवर्य्य गोस्वामि तिलकायित श्री १०८ श्री इन्द्रदमनजी (श्री राकेशजी) महाराज श्री की आज्ञा से विद्याविभाग मंदिर मंडल नाथद्वारा ने प्रकाशित किया है । अणुभाष्य संशोधन में श्रीरामचन्द्रजी आमेटा व्याकरणाचार्य व्याख्याता संस्कृत कॉलेज नाथद्वारा ने पूर्ण मनोयोग से सहयोग किया है फिर भी संभव है कि अशुद्धि रह गई होगी। अन्ततस्तु निवेदनम् -

दोषा मनुष्यसहजा इति, ते यदि स्यु-<br>
र्गन्थेऽस्मिन्नपितदिमान् सुधियः क्षमन्ताम् ।<br>
एतावदेव रचिताञ्जलिरर्थये वः,<br>
शान्ताःपतन्त्विह भवत्करुणा कटाक्षाः ।।

निवेदक<br>
यदुनन्दन त्रिपाठी श्री नारायणजी शास्त्री<br>
विद्याविभागाध्यक्ष<br>
मन्दिर मण्डल नाथद्वारा (राज.)

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

## अथ चतुर्थाध्यायस्य प्रथमः पादः ।

### १ आवृत्त्यधिकरणम् ।

समन्वयेनाविरोधात् साधनैर्ब्रह्मविद् यदि ।
तस्याग्रिमन्यवस्था या सा च तुर्ये विविच्यते ॥४०॥
जीवतो म्रियमाणस्य गच्छतः सफलस्य च ।
अतो ब्रह्मविदा कार्यमेवमेव न चान्यथा ॥४१॥
तामसीं बुद्धिमाश्रित्य ये मूढाः सर्वविप्लवम् ।
वदन्ति शास्त्रनाशाय सद्भिः शोच्याश्च येनु तान् ॥४२॥
ब्रह्मविद्गमनाभावः शतांशेनापि चेद् भवेत् ।
शास्त्रमेतद् वृथा जातं सर्वसूत्रविनाशतः ॥४३॥
स्वाप्ययस्य च संपत्तेरत्र ब्रह्मगतिश्रुती ।
अन्यथा न श्रुतेरर्थः स्याच्चेद् व्यासो वदेन्न किम् ॥४४॥
तामसीं बुद्धिमाश्रित्य या मुक्तिः कैश्चिदुच्यते ।
सा सुषुप्तिश्रुतेरर्थो मोहादेवान्यथा मतिः ॥४५॥
अतो ब्रह्मविदः कार्यं जीवतः पूर्वमुच्यते ।
आवृत्तिः श्रवणादीनां नवकृत्वोपदेशतः ॥४६॥
दर्शनार्थत्वतो लिङ्गादपि व्रीह्यवघातवत् ।
आवृत्तौ श्रवणादीनामात्मेति स्याद् दृढा मतिः ॥४७॥
आपाततो दर्शनं तदभेदेनापि बोध्यते ।
प्रतीकोपासनादीनां नैवं भावो हि जायते ॥४८॥
आलम्बनार्थ तत्रापि ब्रह्मदृष्टिर्विशिष्यते ।
आदित्यादिब्रह्मदृष्टेरङ्गत्वं न स्वतन्त्रता ॥४९॥

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

मनने च निदिध्यासे विशेषश्चोच्यतेधुना ।
आसनादिषडङ्गैस्तु चित्तं श्रौतार्थ एव हि ॥५०॥
धारयेदामतेरेवं ततः सिद्धिमवाप्स्यति ।
धर्माधर्मभयं तस्य नास्त्येवेति विनिश्चयः ॥५१॥
अग्निहोत्रादिकं कार्यं संन्यासः फल एव हि ।
षोढा चेत्पुरुषो व्यक्तः प्रारब्धान्ते फलं भवेत् ॥५२॥
एतावान् प्रथमे पादे निर्णयः सूत्रकृत्कृतः ।
द्वितीये म्रियमाणस्य सर्वेन्द्रियलयः पुरा ॥५३॥
लिङ्गस्यापि शरीरस्य नाड्योत्क्रान्तिरिहोच्यते ।
दिनायनकृतो नास्य विशेषोस्तीति चोच्यते ॥५४॥
तृतीये क्रममुक्तौ यो मार्गो यस्य श्रुतेर्मतः ।
तन्निर्धारोन्यमार्गाणामप्राप्यत्वं च वर्ण्यते ॥५५॥
गन्तव्यं च परं ब्रह्म कार्यो लोकस्तु नेति च ।
तुरीये पुष्टिमर्यादाभेदेन फलमुच्यते ॥५६॥
प्रभोरेव फलत्वं तन्निर्दोषत्वं च वर्ण्यते ।
लीलानित्यत्वतः पूर्णगुणत्वं च ततोखिलम् ॥५७॥

अस्य फलप्रकरणत्वेपि साधनरूपस्यापि श्रवणस्यान्तरङ्गत्वं ज्ञापयितुं तन्निर्धारमप्याह ।

आवृत्तिरसकृदुपदेशात् ॥४।१।१॥

आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (बृ.४।५।६) इत्यादिवाक्यैर्विहितं श्रवणादिकं किं सकृदेव कर्तव्यमुतासकृदिति भवति संशयः । किं तावत्प्राप्तं सकृदेवेति । तावतैव शास्त्रार्थस्य संपत्तेः । न च तण्डुलनिष्पत्तिफलकावघातस्येव दर्शनफलकानां श्रवणादीनां तत्सिद्धिपर्यन्तमावृत्तिर्न्यायप्राप्तेति वाच्यम् । अवघातस्य

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

वितुषीकरणात्मकदृष्टद्वारकत्वेन तथात्वमस्तु वाच्यम् । अवधातस्य वितुषीकरणात्मकदृष्टद्वारकत्वेन तथात्वमस्तु नाम । प्रकृते त्वदृष्टद्वारकत्वात् सकृत्कृतेनैवादृष्टद्वारा फलसंपादनसंभवादावृत्तिरप्रयोजिकेति प्राप्ते ।

उच्यते । आवृत्तिरेव श्रवणादीनां श्रुत्यभिमता । कुत: । असकृदुपदेशात् । छान्दोग्ये श्वेतकेतूपाख्याने-ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो (छां.६।८।७) इति वाक्येन जडजीवयोर्ब्रह्मात्मत्वं नवकृत्व उपदिष्टवान् । तथा च सकृदुपदेशेनैव चेदर्थसिद्धि: स्यात्तदैकमेवार्थमेकस्मा एकदैवासकृन्नोपदिशेत् । प्रयोजनाभावात् । एतेनावधातवदन्त:करणदोषनिवर्तनं दृष्टद्वारमन्येषामुपदेशानां चरमस्य तस्य ज्ञानसाधकत्वमित मन्तव्यम् ॥४।१।१॥

अत्रैव हेत्वन्तरमाह ।

लिङ्गाच्च ॥४।१।२॥

श्रुत्यनुमापकत्वेन स्मृतिर्लिङ्गमित्युच्यते । सा च-यथा यथात्मा परिमृज्यतेसौ मत्पुण्यगाथाश्रवणाभिधानै: । तथा तथा पश्यति तत्त्वसूक्ष्मं चक्षुर्यथैवाञ्जनसंप्रयुक्तम् (भा.११।१४।२६) इत्यादिरूपा तदावृत्तिमेव फलसाधकत्वेनाह । अत्र दृष्टान्तेनापि दृष्टद्वारकत्वं श्रवणादीनां सूच्यते-आत्मा वारे द्रष्टव्य:(बृ.४।५।६) इति पदेन श्रवणादीनां फलात्मकं दर्शनं पूर्वमुक्त्वा श्रोतव्यो मन्तव्य इत्यादिना तत्साधनानि पश्चाद्यदाह तेनात्मन: परोक्षमपि ज्ञानमवान्तरफलरूपमिति । भक्तिमार्गे परमफलरूपतत्सजातीयत्वेन च फलमध्यपात्येवेति श्रुत्यभिमतमिति ज्ञायते। तेन सूत्रकृदपि फलप्रकरणेपि साधनविचारं चकारेति निगूढाशय: । तथापि शाब्दक्रमादार्थकमो बलीयानिति न्यायाद् द्रष्टव्य इति पदस्य पश्चात्संबन्धे तूक्तरीतिर्नावसरं प्राप्नोतीति प्रकृतविचारस्य फलप्रकरणासंगतत्वमापततीति प्रकारान्तरेण सूत्रार्थ उच्यते । आवृत्तिरसकृदुपदेशात् । श्रुतिर्हि कर्मज्ञानभक्ती: साक्षात्परम्पराभेदेन पुरुषार्थसाधनत्वेन हीनमध्यमोत्तमाधिकारिण: प्रति कर्तव्यत्वेन प्रतिपादयति । तत्र तेषां फलं चिन्त्यते। तत्रादौ कर्ममार्गस्य फलमुच्यते ।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

ज्ञानभक्त्योरेवे क्रमेणोत्तमात्युत्तमफलकत्वमतस्तत्साधनत्वेनैव तत् कर्तव्यं न तु स्वातन्त्र्येणेति ज्ञापयितुम् । आवृत्तिरिति । कर्ममार्गस्यावृत्ति: पुनर्जन्मफलं तदप्यसकृत्। इदं परमावृत्त्योभयत्रापि संबध्यते । तथा चात्र प्रमाणापेक्षायां तदाह हेतुत्वेनासकृदुपदेशादिति । श्रुतौ कर्ममार्गे पुनर्जन्मासकृदुपदिश्यते यत: । अन्यथा सकृदुपदेशेनैव तदवगमेप्यसकृदुपदेशो व्यर्थ: स्यादतस्तथेत्यर्थ: । वाजसनेयिशाखायां पठयते । एवमेवायँ शारीर आत्मैभ्योङ्गेभ्य: संप्रमुच्य पुन: प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव (बृ.४/३/३६) इति तत्रैव पुनस्तेन प्रद्योतेनैष आत्मा निष्कामति इत्युपक्रम्य पठ्यते - तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च (बृ.४/४/२) इति । तत्रैवैतदनुपदमेव-तद्यथा तृणजलायुका (बृ.४/४/३) इत्युपक्रम्य पठ्यते-एवमेवायं पुरुष इदँ शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरँ रूपं तनुते पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वान्येभ्यो वा भूतेभ्य: (बृ.४।४।४) इति । तत्रैवाग्रे पठ्यते । प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मैलोकाय कर्मणे (बृ. ४/४/६) इति ।

अत्र हेत्वन्तरमाह । लिङ्गाच्च । वेदानुमापकत्वेन स्मृतिर्लिङ्गमित्युच्यते । सा च भगवद्गीतासु-त्रैविद्या माम् (भ.गी.९/२०) इत्युपक्रम्य पठ्यते-एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते (भ.गी.९/२१) इति । आब्रह्मभुवनांल्लोका: पुनरावर्तिनोर्जुन (भ.गी.८/१६) इति च।

अथवा-यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्य: पुण्येन कर्मणा भवति पाप: पापेन (बृ.४/४/५) इति श्रुतिर्वर्तमानजन्मकर्मणो: पूर्वजन्मसंबन्धिकर्मानमापकत्वं वदतीति कर्मिण: पुनर्जन्मावश्यकमिति ज्ञायते । एवं सति लिङ्गत्वेन निरूपणादित्यर्थ: संपद्यते । निवृत्तिमार्गीयस्यापि तस्य ज्ञानोपकर्तृत्वमात्रं न तु जन्मनिवर्तकत्वं मानाभावात् ॥४।१।२॥१॥

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

## २ आत्माधिकरणम्

एवं कर्मफलं विचार्य ज्ञानफलं विचारयति।

### आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥४।१।३॥

पूर्वार्थनिरूपणव्यवच्छेदाय तुशब्दः । ज्ञानिनो हि भगवन्तमात्मत्वेनेवोपासते । तस्या नैरन्तर्येनेकजन्मभिस्तथैव तेषां हृदि भगवान् स्फुरति । तदा स्वानन्दांशस्याप्याविर्भावाद् ब्रह्मभूतः सन्नात्मत्वेनैव ब्रह्म स्फुरितमिति तदानन्दात्मकः संस्तमनुभवति । एवं स्थितः प्रारब्धसमाप्तौ देहापगमे तत्रैव प्रविष्टो भवति । सर्वोपकारीति पदार्थमपि तस्मै भगवता ज्ञानं दत्तमिति प्रवचनमपि तस्य फलान्तःपातीत्यधिकारिण्युपस्थिते तथैवोपदिशति च । एतदेवाह। आत्मेत्यादिना । उप समीपे गमनं प्रवेश इति यावत् ।

अथवा । ननु ज्ञानभक्त्योरनावृत्तिः फलमत उत्तमे ते न तु कर्मेत्याशयेन कर्मणः फलमावृत्तिरिति यन्निरूपितं तत्रेदं चिन्त्यते । न स पुनरावर्तते (का.३) इति श्रुतिः सर्वथानावृत्तिमाहोत सावधिकींताममरशब्देन तन्निवृत्तिमिव । किमत्र युक्तम् । सावधिकीमेवेति । तथाहि पूर्वकर्मनैयत्यस्य त्वयाप्यङ्गीकार्यत्वात्तस्य प्ररोहैकस्वभावत्वात्तस्य दुरति-क्रमत्वात्तत्फलानुभवस्यावश्यकत्वात् ।

अपि च - य एनं विदुः (बृ.४।४।२२) इति श्रुतेः सति ज्ञाने हि सा । यतो वाचः(तै.२/९) अगृह्यो न हि गृह्यते (बृ.४।४।२२) इत्यादिश्रुतिभ्यो ब्रह्मज्ञानासंभवात् । इत एव भक्तिरपि प्रत्युक्ता वेदितव्या । ज्ञानाविषये स्नेहासंभवात्।

किंच - सर्वस्य वशी सर्वस्येशानः (बृ.४।४।२२) इत्यादि श्रुतिभ्यो यस्यावतारकर्माणि गायन्ति ह्यस्मदादयः । न यं विदन्ति तत्त्वेन (भा.२।६।३७) इत्यादिस्मृतिभ्यश्च का प्रत्याशा जीवितस्यातिहीनस्य तत्प्राप्तौ । अत एवोपदेशासंभवोपीति प्राप्ते प्रत्याह । आत्मेतीत्यादिना । तुशब्दः पूर्वपक्षनिरासकः । अत्रायमाशयः । सत्यमुक्तं भवता । तत्रोच्यते । यथागृह्यत्वातिमहत्त्वादिधर्मा भगवति सन्ति तथा सर्वात्मत्वमपि । य आत्मनि तिष्ठन् इत्यादिश्रुतिष्वात्मत्वेनैवोक्तेः ।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

सर्वधर्माश्रयत्वेपि यदा यं धर्मं पुरस्कृत्य लीलां करोति तत्कार्यमेव तदा संपद्यते । हितकारित्वस्वभावत्वात्तस्य । एवं सति यस्मिन् पुरुष यदात्मत्वेन लीलां करोति तदा स्वप्राप्त्यनुकूलप्रयत्नवन्तं विधायात्मानं प्रापयति । ननूक्तं दुरतिक्रमः कर्मस्वभाव इति । नैष दोषः । न ह्यन्नरसपाकाय जग्धमौषधमपि गौरवाय भवति । तेन न तन्निवृत्तिर्वा । व्यापादनैकस्वभावमपि गौरवाय भवति। तेन न तन्निवृत्तिर्वा । व्यापादनैकस्वभावमपि विषमाशीविषं तदपगमपटुतरनिगमसंगमो नापगमयति वा । तथा भगवदर्पितं तदर्थं च कृतं कर्म न कर्मनाशाय भवतीति न वक्तुं शक्यम् । कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा (भा.११/३/४४) इति वाक्यात् । अग्राह्यत्वग्राह्यत्वविरोधापहारस्तु जीवसामर्थ्येश्वरेच्छाभ्यां पुरैव कृत इति नाधिकमत्र निरूप्यम् । इतिशब्दो हेत्वर्थे । तथाच भगवानात्मा भवति सर्वेषां जीवानामतो हेतोरुक्तरीत्या तदनुग्रहेण तमुपगच्छन्ति । ज्ञानमार्गेङ्गीकृतास्त्वात्मत्वेनैव ज्ञानादुपसमीप एव गच्छन्त्युक्तरीत्याक्षरात्मके तत्रैव प्रविष्टा भवन्तीत्यर्थः । भक्तिमार्गेङ्गीकृतास्तु साक्षात् प्रकटे पुरुषोत्तमे सति तद्भजनार्थमुपसमीपं गच्छन्तीत्यर्थः ।

एवं श्लेषोक्तिरियमिति ज्ञायते। संप्रदायानुवृत्तिरपि भगवदिङ्गितेत्येतादृशाः स्वयं येन मार्गेण फलं प्राप्तास्तं मार्गमन्यानपि ग्राहयन्त्युपदेशैरत्रोभयत्राप्यात्मत्वमेव हेतुरन्यथात्मारामस्य सर्वनिरपेक्षस्यैवंकरणासंभवेन मोक्षमार्गाप्रसिद्धिरेव स्यात् । तस्मात् सर्वथानावृत्तिरेव श्रुत्याभिमतेति ज्ञेयम् ॥४।१।३॥

नन्वात्मत्वेनोक्तिरुपासनार्थेति नोक्तं साधीय इत्यत उत्तरं पठति ।

न प्रतीके न हि सः ॥४।१॥४॥

अतद्रूपे तत्त्वेनोपासनं हि प्रतीकमित्युच्यते । तथा च तादृशेन तेन स मोक्षो न भवतीत्यर्थः । श्रुतिसिद्धत्वान्नास्ति मोक्ष इति न वक्तुं शक्यमिति भावः । अथवात्मत्वेनोक्तिरूपासनार्थेति वदन् वादी वक्तव्यः। फलार्थमेव तत् । फलं च श्रुत्युक्तस्तत्प्रवेश एवेति त्वयापि वाच्यम् । एवं सत्यादौ ज्ञानमार्गेनुपपत्तिमाह । न

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

प्रतीकेनात्मभूते ज्ञानिन उपगमः पूर्वोक्तः प्रवेशः संभवतीति शेषः । भक्तिमार्गेपि तामाह । न हि स इति । न हि प्रतीकोपासने स लोकवेदप्रसिद्धः पुरुषोत्तमोस्त्युपास्यत्वेन येन तत्प्राकट्यं स्यात् तदुपगमनं चेत्यर्थः । एवं ज्ञानभक्त्योः फलसत्ता साधिता ॥४।१।४॥

ननु-सर्वं खल्विदं ब्रह्म । (छां.३ ।१४।१) आत्मैवेदं सर्वम् (छां.७/२५/२) इत्यादिश्रुतयः सर्वत्र ब्रह्मदृष्टिं मुक्तिसाधनत्वेनोपदिशन्ति । सा च प्रतीकात्मिकैवेति कथं प्रतीकोपासनस्य न मोक्षसाधकत्वमिति प्राप्त उत्तरमाह ।

ब्रह्मदृष्टिरुत्कर्षात् ॥४।१।५॥

सर्वत्र ब्रह्मदृष्टिर्न प्रतीकात्मिका सर्वस्य वस्तुतो ब्रह्मात्मकत्वात् । सा च नोपदेशसाध्यातो नोपदिश्यते। किंत्वनूद्यते । सा त्वधिकारोत्कर्षात् स्वत एव भवतीति प्रतीकोपासनस्य न मुक्तिसाधनत्वमिति साधूक्तम् । एतदेवोक्तमनेन सूत्रेण ॥ ४।१।५॥२॥

३ आदित्याद्यधिकरणम् ।

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥४।१।६॥

छान्दोग्ये - अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाच (छां.५/१३/१) इति । अथ होवाचेन्द्रद्युम्नम् (छां.५।१४।१) इत्युपक्रम्य-त्वं कमात्मानमुपास्स इति वायुमेव भगवो राजन् इति होवाच (छां.५।१४।१) इति । एवमेवाग्रे प्रश्नभेदेन वक्तृभेदेनाकाशाप्यप्रभृतय आत्मत्वेनोपासनाविषया उक्ताः । तत्रैव-असौ वा आदित्यो देवमधु (छां.३।१।१) इत्युपक्रम्यान्ते पठ्यते । य एतमेव विद्वानादित्यं ब्रह्मोपास्ते (छां.३।१९।४) इति । अत्रेदं चिन्त्यते अत्र प्रतीकोपासनत्वमस्ति न वेति । अस्तीति पूर्वः पक्षः । तथाहि । सर्वं खल्विदं ब्रह्म (छां.३।१४।१) इति श्रुतौ सर्वमनूद्य ब्रह्मत्वं तत्र बोध्यत इति न क्वचित्प्रतीकोपासनमस्तीति हि पूर्वं निरूपितम् । तच्चोक्तश्रुतिभिः प्रत्येकं तत्त्वेनोपास्यत्वेनोक्त्वा नोपपद्यते । ब्रह्मण एकत्वादेकप्रकारेणैवोपासनेन सर्वेषां

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

फलसिद्धे: पृथक् पृथगुक्तौ गौरवात् प्रयोजनविशेषाभावाच्च । तादृशाधिकाराभावात् पृथक् तदुक्तिरिति चेद् । न । सर्वत्र सदा तद्भावनायां तथानुभवस्यापि संभवात् । एवं सति वस्तुत: सर्वस्य ब्रह्मत्वं नाभिमतं किंतु यथादित्यादीनां तत्तथा तथा सर्वस्यापीति प्रतीकोपासनत्वमेव सर्वत्र । तेनैव फलमिति प्राप्ते प्रतिवदित । आदित्यादौ या ब्रह्मत्वमतय उच्यन्ते तास्तुसाकारस्यैव ब्रह्मणो व्यापकत्वात् तस्य प्रत्येकमप्यङ्गमुपासितं फलदमित्येकैकाङ्गविषयिण्यस्ता विधीयन्ते । उपपन्नं चैतत् । नहि साकारव्यापकब्रह्मणोङ्गं न ब्रह्मातो न प्रतीकोपासनत्वं तत्र । अपरं च । असौ वा आदित्यो देवमधु (छां.३।१।१) इत्युक्त्वा - तस्य प्रतिदिक्करश्मीनां कृपावलोकनरूपाणां मधुत्वं निरूप्य तद् यत् प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति । त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति (छां.३/१०/२) इति पठ्यते । तथा च दर्शनमात्रेणान्यधर्मानिवृत्तिस्तस्यैव स्वतन्त्रपुरुषार्थत्वेन ज्ञानमतिशयितस्नेहजविगाढभावेन तत्रैव लय: । पुनस्तद्दर्शनानन्दामुभवार्थं भगवानेव कृपया पुन: पूर्वभावं संपादयतीति तस्माद्रूपादुदयश्चैतत्सर्वं भगवदङ्गत्व एवोपपद्यत इत्यपि हेत्वभिप्रेतोर्थो ज्ञेय: । न हि प्रतीकत्व इदं सर्वं संभवति भक्तिमार्गीयत्वादस्यार्थस्येति भाव:। अङ्गानां भगवत्स्वरूपात्मकत्वेनैक्यामिति ज्ञापनायैकवचनम् । एतेन स्वरूपस्यैव फलत्वमुक्तं भवतीति मुख्य: सिद्धान्त: सूचितो भवति ॥४।१।६॥

## आसीन: संभवात् ॥४।१।७॥

पूर्वसूत्रेण धर्ममात्रस्य फलत्वमुक्त्वाधुना धर्मिण: फलत्वं तत्साधनं चाह । संभवात् । उत्कटस्नेहात्मकसाधनस्य संभवात्तदधीन: संस्तदग्र आसीनो भगवान् भवति । एतेन भक्तवश्यतोक्ता ॥४।१।७॥

एवं बहि: प्राकट्यमुक्त्वान्तरं तदाह ।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

ध्यानाच्च ॥४।१।८॥

भावनौत्कट्यदशायां व्यभिचारिभावात्मकसततस्मृतिरूपध्यानादपि हृदि प्रकट: सन्नासीनो भवतीत्यर्थ: । तेन स्थैर्यमुक्तं भवति ॥४।१।८॥

एवं भक्तेच्छयैव स्वरूपप्राकट्यमित्युक्त्वा लीलानाविष्करणमाविष्करणं चापि तदिच्छयैवेत्याह ।

अचलत्वं चापेक्ष्य ॥४।१।९॥

भक्तेच्छामपेक्ष्याचलत्वं चकाराच्चलत्वमपीत्यर्थ: ॥४।१।९॥

स्मरन्ति च ॥४।१।१०॥

केचन भक्ता: स्वरूपनिरपेक्षास्तत्स्मरणजनितानन्देनैव विस्मृतापवर्गान्तफला भवन्ति । चकाराच्छ्रवणकीर्तनादयोपि समुच्चीयन्ते । तदुक्तम् अथ ह वाव तव महिमामृतसमुद्रविप्रुषा सकृल्लीढया स्वमनसि निष्पन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतसुखलेशाभासा: परमभागवता: (भा.६।९।३९) इति । अथवा-अहं भक्तपराधीन: (भा.९।४।६३) इत्यादिस्मृति: पूर्वोक्ते प्रमाणत्वेनोक्ता ॥४।१।१०॥३॥

४ यत्रैकाग्रताधिकरणम् ।

यत्रैकाग्रता तत्राविशेषात् ॥४।१।११॥

अथेदं विचार्यते । बहिराविर्भावो येभ्यो येभ्यश्चान्तस्तेषां तेषां च मिथस्तारतम्यमस्ति न वेति । तत्र निर्णयमाह । यत्र भक्तेष्वेकाग्रता भगवत्स्वरूपे प्रकट एवैकस्मिन् ग्राहकचित्तधारा न त्वन्तर्बहिर्विज्ञानं तत्रोभयोरन्त: पश्यतो बहि: पश्यतश्च भावे भगवत्स्वरूपे च विशेषाभावान्न तारतम्यमस्तीत्यर्थ: ॥४।१।११॥४॥

५ आप्रायणाधिकरणम् ।

आप्रायणात्तत्रापि हि दृष्टम् ॥४।१।१२॥

उक्तेर्थ एवायं संशय: । अन्त: प्राकट्यवतो यदा बहि: संवेदने सत्यपि पूर्वानुभूतभगवत्स्वरूपानुभवस्तदा पूर्वमन्तरमन्वभूवमधुना बहिरनुभवामीत्यनुव्यवसायो

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

भवति न वेति । तत्र वैलक्षण्याद् भवितुमर्हतीति पूर्वः पक्षः। तत्र सिद्धान्तमाह । आप्रायणादिति । श्रीभागवते-प्रायणं हि सतामहम् (भा.११।११।४८) इति भगवद्वाक्यात् प्रायणशब्देन स्वतः पुरुषार्थत्वेन प्राप्यं परमं पारलौकिकं फलमुच्यते । तथा च फलं तन्मर्यादीकृत्य तस्य सैवावस्था सार्वदिकी न तु बहिः प्राकट्येपि बहिष्ट्वानुसंधानमित्यर्थः । ततस्तस्य तत्र सायुज्यं भवति न वेति संशये निर्णमाह । तत्रापि प्रायणेपि प्राप्ते तस्य पूर्ववत् प्रभुणा सममालापावलोकनश्रीचरणनलिनस्पर्शादिकं दृष्टमेव फलं न त्वदृष्टं सायुज्यमित्यर्थः । यतः शुद्धपुष्टिमार्गेङ्गीकृतोन्यथा पूर्वोक्तभावसंपत्तिः कथं स्यादित्युपपत्तिर्हिशब्देन सूच्यते । एतच्च-तद्भूतस्य तु नातद्भाव (ब्र.सू.३।४।४०) इत्यत्र निरूपितम् ॥४।१।१२॥५॥

## ६ तदधिगमाधिकरणम् ।

### तदधिगम उत्तरपूर्वाधयोरश्लेषविनाशौ तद्व्यपदेशात् ॥४।१।१३॥

पुष्टिमार्गीयभक्तस्य फलं निरूप्य मर्यादामार्गीयस्य तस्य फलं चिन्त्यते । तत्र तु ज्ञानपूर्वकत्वं भक्तेरावश्यकम् । कर्ममर्यादाया अपि स्वकृतत्वात्तामनुलङ्घ्यैव भगवता फलं दीयते । तच्च नाभुक्तं क्षीयते। तद्भोगानुकूलकर्मणा स्वसजातीयतत्संतानजननादनिर्मोक्ष एव सर्वस्य संपद्यते । न च प्रायश्चित्तवज्ज्ञानस्य कर्मनाशकत्वं वक्तुं शक्यम् । तद्वत्तस्य तदुद्देशेनाविहितत्वात् । तथा कथने चान्योन्याश्रयः। दुरितस्य चित्ताशुद्धिहेतुत्वेन तन्नाशे ज्ञानोदयो यतोतो मर्यादामार्गे मुक्तिरनुक्तविषयेति प्राप्त उच्यते । तदधिगमे ब्रह्मज्ञाने सति तज्ज्ञानस्वभावादेवोत्तराधस्याश्लेषोसंबन्धः पूर्वस्य तस्य विनाशो भवतीत्यर्थः। अत्रोत्तरस्योत्पन्नस्याश्लेष इति नार्थस्तस्यात्मन्येवोत्पत्तेस्तदतिरिक्तस्य श्लेषस्याभावादतोनुत्पत्तिरेवार्थः। न चैवं मर्यादामार्गीयत्वभङ्गः । साधनं विना स्वरूपबलेनैव कार्यकरणे हि पुष्टिरिह तु नियतकर्मविरोधित्वस्वभावेन ज्ञानेनैव तथा संपत्तेः। अत एव-तद्यथेषीकातूलमग्नौ प्रोतं पद्रूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते (छां.५।२४।३) इति श्रुतिरग्निदृष्टान्तमाह । स्मृतिरपि-यथैधांसि

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

समिद्धोग्निर्भस्मसात्कुरुतेर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा (भ.गी.४।३७) इति । सर्वं पाप्मानं तरति ब्रह्महत्यां योश्वमेधेन यजते (छां.५।२८।३) इत्यादिश्रुतिभिस्त्वयापि न तद्भोगनियमो वक्तुं शक्यः । एतेनाभुक्तस्याक्षयाद्भोगे च कर्मान्तरजननान्मोक्षासंभव इति निरस्तं वेदितव्यम् । न चान्योन्याश्रयः । अनाद्यविद्याजनितसंसारवासनात्मिका हि सा । सा च गुरूपसत्तिश्रवणमननविध्युपासनादिरूपया ज्ञानसामग्र्यैव नाश्यते । अविद्या परं ज्ञानेन नाश्यत इति क तत्प्रसंगः । ज्ञानसामग्र्या बलिष्ठत्वात्कर्मणो दुर्बलत्वान्न तत्प्रतिबन्धकत्वमिति ज्ञाननाश्यत्वबोधकश्रुतिस्मृतिमता त्वयाप्युररीकार्यम् । इममेव हेतुमाहाचार्यस्तद्यपदेशादिति ॥४।१।१३॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥४।१।१४॥

पापस्य शास्त्रविरोधित्वेन शास्त्रीयज्ञानेन समं विरोधो भवतु नाम । धर्मस्यातथात्वेनाविरोध एवेत्याशङ्कानिरासाय पूर्वन्यायातिदेशमाह । इतरस्य पुण्यस्याप्येवं पूर्वस्य नाश उत्तरस्याश्लेष इत्यर्थः। अतिदेशाद्धेतुरपि स एव ज्ञेयः । तथाहि । उभे उ हैवैष एते तरति (बृ.४।४।२२) । क्षीयन्ते चास्य कर्माणि (मुं.२।२।८) इति सामान्यवचनात्-ज्ञानाग्निः सर्वकर्माणि (भ.गी.४।३७) इति स्मृतौ सर्वशब्दाच्च तथा । अथेदं शङ्क्यते । मर्यादामार्गीयत्वाज्ज्ञानानन्तरं भरतवत्संगदोषेण भगवद्भावाच्च्युतौ संगजदोषोत्पत्तिवदग्रे विहितनिषिद्धकर्मणोरप्युत्पत्तिर्वक्तुं शक्येति ज्ञानस्य न सर्वात्मना कर्मविरोधित्वमिति । तत्र निर्णयमाह । पाते भक्तिमार्गे भगवद्भावाच्च्युतिः पात इत्युच्यते । तुरप्यर्थे । अपिशब्दे वाच्ये व्यवच्छेदार्थकतुशब्दोक्त्यास्मिन्मार्गे पापस्य व्यवच्छेद एव । न कर्हिचिन्मत्परा इति वाक्यात् । परंतु मर्यादामार्गीयत्वात् प्रारब्धभोगार्थं प्रभुश्चेत्तथा करोति तद्भावे पूर्णे सति तद्भोगोसंभावित इति तदेवं भवतीति व्यासाभिप्रायो ज्ञायते ।

तथाच तस्मिन् सत्प्युत्तरस्य कर्मणोसंश्लेष एवेत्यर्थः । पूर्वसूत्र एवमेवाश्लेषशब्दस्य व्युत्पत्तेः । अतिदेशस्यैवंपदेनैव प्राप्तेः सर्वं सूत्रं तत्परत्वेन न

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

व्याख्येयम् । पातशब्दस्य देहपातं तुशब्दस्यावधारणमर्थमुक्त्वा देहपाते मुक्तेरावश्यकत्वावधारणं वाक्यार्थ इति चोक्तिर्न साधीयसी । मुक्तिप्रापकपदाभावात् - भोगेन त्वितरे क्षपयित्वाथ संपद्यते (ब्र.सू.४।१।१९) इत्यग्रे वक्तव्यत्वाच्च ॥४।१।१४)

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥४।१।१५॥

ननु देहस्य कर्मजन्यत्वात्तन्नाशे तन्नाशस्यावश्यकत्वाच्च ब्रह्मविदः प्रवचनानुपपत्तिः । एवं सति ब्रह्मजिज्ञासोर्गुरूपसत्त्यादिसाधनासंभवः । आचार्यवान् पुरुषो वेद (छां.६।१४।२) इति श्रुतेस्तदभावेन ज्ञानमार्गोच्छेदेन मुक्त्युच्छेदप्रसंग इत्याशङ्क्य समाधत्ते । पूर्वे पूर्वसूत्राभ्यां ज्ञाननाश्यत्वेन ये प्रोक्ते पापपुण्ये ते नाशेषे किंत्वनारब्धं भोगायतनलक्षणं कार्यं याभ्यां त एवेत्यर्थः । नन्वितरनिरपेक्षं हि ज्ञानं स्वशक्त्यैवाग्निरेध इव कर्माणि दहतीति पूर्वमुक्तं तथा सत्यशेषमेव तद्दहतीति वक्तुं युक्तम् । न तु सशेषम् । शक्तेरविशिष्टत्वात् । न च कर्मनाशेपि संस्कारवशात् कुलालचक्रभ्रमिवत्तद्वासनावशात् देहादिसत्तया प्रवचनाद्युपपत्तिरिति वाच्यम् । ज्ञानस्य सर्वतो बलवत्त्वात् सवासनस्य तस्य नाशनात् । न हि महाशिलानिष्पाते चकभ्रमिरनुवर्तितुं शक्नोतीत्याशङ्क्यारब्धकार्यादहने हेतुमाह-तदवधेः । तज्ज्ञानेनारब्धकर्मणा योगारम्भणतो विभ्रंशित (भा.५/८/२६) इति । उपभोगेन कर्मारब्धं व्यपनयन् (भा.५।१०।१४ ) इति च भरतं प्रति वचनं गीयते । एवं सति मणिमत्रादिप्रतिबद्धशक्तेरग्नेरिव ज्ञानस्याप्यदाहकत्वे न काचिद्धानिरिति सर्वमनवद्यम् । इच्छाप्रतिबद्धतादशायां न प्राचीना दशास्तीति तद्यवच्छेदज्ञापनाय तुशब्दः । एतेन भगवद्भावस्य सर्वतो बलवत्त्वात् कथं तस्य पात इति शङ्का निरस्ता । भगवदिच्छाया मूलकारणत्वेनोक्तेस्तस्याः सर्वतो बलिष्ठत्वात्। तथेच्छा च स्वकृतमर्यादापालनाय पुष्टावङ्गीकृते न तथेति सर्वमनवद्यम् ॥४।१।१५॥

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥४।१।१६॥

ननु प्रारब्धं हि प्राचीनं तन्नाशाय तद्भोग एव कर्तव्यो ब्रह्मविदा न तु विहितमन्यदप्यग्निहोत्रादि । प्रयोजनाभावात् । दृश्यते च तादृशानां तत्करणमत उत्तरस्य कर्मण: संश्लेष आवश्यक इत्याशङ्क्य तत्प्रयोजनमाह । तुशब्द: शङ्काव्युदासक: । अग्निहोत्रादिविहितकर्मकरणंतत्कार्यायैवभोगकार्याय प्रारब्धनाशायैवेत्यर्थ:। येषामग्निहोत्रादिकारकं प्रारब्धमस्ति तैरेव तन्नाशाय भोगवत्तदपि क्रियते न त्वतादृशैरत एव न सनकादीनां तथात्वम् । कुत एतत् । तद्दर्शनात् । यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्य: पुण्येन कर्मणा भवति पाप: पापेन (बृ.४।४।५) इति श्रुति: पूर्वकर्मणोग्रिमकर्महेतुत्वं दर्शयतीति नानुपपत्ति: काचित् । केचित्तु ज्ञानस्य यत्कार्यं तदेवाग्निहोत्रादेरिति तत्कार्यायेति पदस्यार्थं वदन्ति । स नु साधु: । तदधिगम इत्युपकमाद् तत्कार्यायेति पदस्यार्थं वदन्ति । स न साधु: । तदधिगम इत्युपकमाद् ब्रह्मविद: प्रारब्धात्मकप्रतिबन्धनाशे मोक्षस्य पूर्वज्ञानेनैव संपत्ते: कर्मणो वैयर्थ्यापातात् । तेमतं वेदानुवचनेन (बृ.४।४।२२) इत्यादिश्रुतिदर्शनं दर्शनपदार्थ पूर्वविरोधादुपेक्ष्य: ॥४।१।१६॥६॥

७ अतोन्याधिकरणम् ।

अतोन्यापि ह्येकेषामुभयो: ॥४।१।१७॥

तदेवं पूर्वसूत्रचतुष्टयेन मर्यादामार्गीयभक्तस्य मर्यादयैव मुक्तिप्रतिबन्धसंभवस्तयैव तन्नाशश्चेति निरूपितम् । अथ पुष्टिमार्गीयस्य विनैव भोगं प्रारब्धं नश्यति न वेति विचार्यते । अथ पुष्टिमार्गीयस्य विनैव भोगं प्रारब्धं नश्यति न वेति विचार्यते । तत्र भोगैकनाश्यस्वभावत्त्वात्तस्य न तं विनास्यापि तन्नश्यतीति प्राप्ते निर्णयमाह। एकेषां पुष्टिमार्गीयाणां भक्तानामुभयो: प्रारब्धाप्रारब्धयोर्भोगं विनैव नाशो भवति । कुत एतत् । तत्राह । अत: श्रुते: कर्मणो ज्ञाननाश्यत्वनिरूपिकाया: । ब्रह्मविद एव प्रवचनादिनिरूपणेन तदनाश्यप्रारब्धाख्यकर्माक्षेपकश्रुतेश्च । अन्यापि श्रुति: पठ्यते । तस्य पुत्रा दायमुपयन्ति सुहृद: साधुकृत्यां द्विषन्त: पापकृत्याम् इति । ज्ञानभोगाभ्यां

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

कर्मनाशनिरूपकश्रुत्यास्या: श्रुतेर्विरोधपरिहारायावश्यं विषयभेदो वाच्य: । न च काम्यकर्मविषयेयं श्रुतिरिति वाच्यम् । तदधिगम उत्तरपूर्वाधयोरश्लेषविनाशौ (ब्र.सू.४।१।१३) इति सूत्रेणेतरस्याप्येवमिति सूत्रावयवेन चाविशेषेणारब्धातिरिक्तकर्मणोरखिलयोर्नाशनिरूपणात् । पापकृत्यायां काम्यत्वासंभवाच्च । तस्मादत्यनुग्रहभाजनस्य भक्तस्य स्वप्राप्तिविलम्बमसहिष्णुर्भगवानस्य प्रारब्धमेतत्संबन्धिगतं कृत्वा तस्य तेन भोगं कारयति । प्रारब्धं भोगैकनाश्यमिति स्वकृतमर्यादापालनाय न नाशयति । न च तयोरमूर्तत्वेनाकृताभ्यागमप्रसंगेन च नैवं वक्तुमुचितमिति वाच्यम् । ईश्वरत्वेनान्यथापि करणसंभवात् । मर्यादाविपरीतस्वरूपत्वात् पुष्टिमार्गस्य न काचनात्रानुपपत्तिर्भावनीया । तस्या अत्र भूषणत्वात् । अत एवैकेषामिति दुर्लभाधिकार: सूचित: ॥४।१।१७॥

यदेव विद्ययेति हि ॥४।१।१८॥

ननु-यदेव विद्यया करोति (छां १।१।१०) इति श्रुत्या विद्यापूर्वकं कर्मकरणे वीर्यातिशय: फलं श्रूयते। अतो ब्रह्मविद्यावतोपि तथात्वस्योचितत्वात् तदुत्तरस्याश्लेष इति यदुक्तं तन्नोपपद्यत इति प्राप्त आह। यदेवेति । हि यस्माद्धेतोस्त्वया-यदेव विद्यया करोति श्रद्धयोपनिषदा (छां.१।१।१०) इति श्रुतेरेव ब्रह्मविदोपि कर्मोत्पत्तिप्रसञ्जिकात्वेनोदाहृता । सा तु न समर्था । तथाहि । ॐमित्येतदक्षरमुद्गीथमुपासीत (छां.१।१।१) इत्युपक्रम्य तस्य रसतमत्वं मिथुनरूपत्वमनुज्ञाक्षरत्वं त्रयीप्रवृत्तिहेतुत्वं च निरूप्यैतदग्रे-यदेव विद्यया (छां.१।१।१०) इत्याद्युक्त्वा-इति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवतीत्युपसंहारादुद्गीथोपासनाविषयमेव यदेव विद्ययेति वाक्यमिति ज्ञायते। तेनोक्तरसतमत्वादिप्रकारकोपासनानां मध्ये-यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति (छां.१।१।१०) इति तदर्थ इति न ब्रह्मविद्यागन्धोपीति न सा शङ्कात्र संभवतीत्यर्थ: । यद्वा। उक्ताशङ्कानिरासायैवाह । यदेवेति । ब्रह्मविद्भि: प्रारब्धक्षयायैव कर्म कुरुते तत्त्वन्यकृतात्कर्मण: सकाशात् सवासनतन्नाशनाद् वीर्यवत्तरं भवत्येवेति नानुप्रपत्ति:

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

काचिदित्यर्थः । यद्वा । ननु पुष्टिमार्गीयस्य प्रारब्धस्यापि भोगं विनैव नाश इति श्रुत्वासंभावनां कुर्वाणं प्रति कैमुतिकन्यायेन तत्परिहारमाह । यदेवेत्यादि । जीवनिष्ठा विद्या हि भगवज्ज्ञानशक्तेरंशभूता । एवं सति यत्र धर्मसंबन्धिसबन्धादन्येभ्योतिशयं कर्मणि वदति श्रुतिस्तत्र साक्षाद्धर्मिसंबन्धेतिशयितकार्यसंपत्तौ कथमसंभावना कर्तुमुचितेति निगूढाशयः । अत एव हेतुवाची हिशब्दः ॥४।१।१८॥

भोगेन त्वितरे क्षपयित्वाथ संपद्यते ॥४।१।१९॥

पुष्टिमार्गीयफलप्राप्तौ प्रतिबन्धाभावं सोपपत्तिकमुक्त्वा तत्प्राप्तिकारमाह । इतरे । अग्रे प्राप्यालौकिकदेहाद्भिन्ने स्थूललिङ्गशरीरे क्षपयित्वा दूरीकृत्य, अथ भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरं भोगेन संपद्यते । सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता (तै.२।१) इति श्रुत्युक्तेन भोगेन संपद्यत इत्यर्थः । श्रुत्यर्थस्त्वानन्दमयाधिकरणे निरूपितः। अलौकिकत्वं विनोक्तदेहं विना चोक्तफलप्राप्तेर्व्यवच्छेदकस्तुशब्दः ॥४।१।१९॥७॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये
चतुर्थाध्यायस्य प्रथमः पादः ॥४।१।

* * *

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

।।श्रीहरिः।।

।। श्रीकृष्णायनमः।।

।।श्रीगोपीजन वल्लभायनमः।।

।। श्रीवाक्पतिरणकमलेभ्योनमः।।

# चतुर्थ अध्याय प्रथम पाद

## ( श्री वल्लभाचार्य-प्रकटितकारिका )

१. समन्वयाध्याय (अर्थात् पहले अध्याय द्वारा समग्र वेद) का ब्रह्म का ही प्रतिपादन करते हैं। अविरोधाध्याय (अर्थात् दूसरे अध्याय से) द्वारा ब्रह्म ज्ञान यह मोक्ष का एक ही साधन है और इसके अतिरिक्त मोक्ष मिलने का दूसरा एक भी उपाय नहीं । इस प्रकार समझने के पश्चात्, ब्रह्मज्ञान देने वाले साधनाध्याय में वर्णित साधनों द्वारा जो एक व्यक्ति को ब्रह्म का ज्ञान हो तो उसको आगे क्या करना और इसको क्या क्या अनुभव हो इसका विवेचन इस चतुर्थ अध्याय में है।

२.यह जीवित हो तब (इसको क्या करने का और इसको क्या-क्या अनुभव हो इसका निरुपण पहले पाद में है) यह जिस समय देह छोड़ता है तब (इसको क्या क्या हो इसका निरुपण दूसरे पाद में है) यह लोक छोड़कर पर लोक की ओर जाता हो तब इसको क्या क्या करना है इसका निरुपण तीसरे पाद में है। और जब उसको परब्रह्म की प्राप्ति हो तब क्या क्या करना इसका निरुपण चतुर्थ पाद में है।

इसलिये ब्रह्म ज्ञानी ने इस प्रथम पाद में क्या कहा है उसी प्रकार ही करना, दूसरी रीति से नहीं।

३. तामसी बुद्धि का आश्रय करके जो मूढ (मायावदी) सभी विपरीत ऐसा कहकर शास्त्र का नाश कर रहे है, उनके ऊपर, और जो लोक इनका अनुसरण कर रहे है उनके ऊपर सत्पुरुषों को तो केवल दया ही करनी है।

**( टिप्पणी-** श्री वल्लभाचार्य का वेदान्त सिद्धांत ब्रह्मवाद है। तदनुसार जो कोई अनुभव गोचर हो रहा है वे सभी ब्रह्म है, जिस तरह सोने के अलग-अलग आभूषण यह सोना ही है उस प्रकार दूसरी प्रकार से कहें तो, ब्रह्म ही जगत रूप हुआ है, ब्रह्म भी सत्य है और जगत भी सत्य है, जिस प्रकार सोना भी सच्चा है और सोने के आभूषण भी सच्चे हैं उसी प्रकार, श्री शंकराचार्य का वेदान्त सिद्धांत मायावाद है। रज्जु जिस प्रकार अंधकार में सर्प लगती है उसी अज्ञान को लेकर ब्रह्म जगत रूप मालुम पड़ता है। यह सर्प जिस तरह मिथ्या है उसी तरह जगत भी असत्य है, जगत असत्य है अर्थात् जगत अन्तः पाती पदार्थ मात्र असत्य है। वेद भी असत्य है और वेद प्रतिपाद्य परमात्मा भी असत्य है, और सुषुप्ति (गाढ निद्रा) में निर्विकल्प अनुभव करने वाले जीव मात्र सत्य, यही ब्रह्म, इसके अतिरिक्त सब असत्य, रज्जु सर्प वत् केवल मान लिया । निर्गुण निराकार ब्रह्म माया को कारण जगत रूप मालुम होता है, जिस प्रकार रज्जु अंधकार के कारण सर्प लगे उस प्रकार, परन्तु यह सर्प ही नहीं उसी तरह यह

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

जगत् भी नहीं। इस प्रकार का वाद ये मायावाद परम वैरागी ज्ञानी को भले ही यह वाद अच्छा लगे, परन्तु परमात्मा के परम अनुरागी भक्तों को तो यह वाद अच्छा नहीं लगता है। इसलिये सभी वैष्णवाचार्यों ने इस प्रकार के मायावाद के सामने एक ही मत से विरोध प्रकट किया है और श्री शंकराचार्य को प्रच्छन्न बौद्ध के समान कहा है । वस्तुस्थिति यह कि आद्य धर्माचार्य भावप्रधान और बुद्धि प्रधान दोनों होते है, केवल बुद्धिमान् होते हैं । और इस प्रकार के बुद्धि प्रधान अनुयायी केवल एक फलक (पक्ष) को प्रस्तुत करते हैं और आद्य धर्माचार्य इसको लेकर संकोच करते हैं। श्री बुद्ध के संबंध में भी ऐसा ही हुआ हो ऐसा लगता है। परमकरुणावतार और मैत्री की मूर्ति शून्यवाद के लिये इतना सब आग्रह रखते हैं ?

४. ब्रह्मज्ञानी इस देह के छूटते ही यहां के यही स्वस्व रूप में लीन हो जाने का हो और इसको आगे जाने का सहज भी नहीं हो तो इस अध्याय का तीसरा पाद व्यर्थ हो जाय, कारण कि इसमें ब्रह्मज्ञानी किस मार्ग से जाता है इसका ही वर्णन है।

५. ब्रह्म प्राप्ति के संबंध दो श्रुति है– एक, स्वाप्यय, अर्थात् सुषुप्ति अथवा गाढ निद्रा, इस बीच में जीव इतने समय में ब्रह्म से जाकर मिलता है, इस प्रकार निरुपण करने वाली और दूसरी, संपत्ति अर्थात् परब्रह्म की नित्य प्राप्ति, इसका निरुपण करने वाली (ब्रह्म प्राप्ति के संबंध में स्पष्ट रीति से तो श्रुति इतना ही कहती है। और स्वाप्यय संपत्योन्यतरापेक्षा माविष्कृतं हि (ब्र.सू. ४/४/१६) इस सूत्र में सूत्र कारने इस कथन का स्पष्ट निरुपण किया है । इससे श्रुति का अर्थ भिन्न नहीं है और जो इन प्रमाणों का इनसे भिन्न अर्थ हो तो सूत्रकार यह क्यों नहीं कहते ?

६. '**स यथा सैन्धव घनः अनन्तर अबाह्यः कृत्स्नः, रसधन एव, एवं वा अरे अयमात्मा अनन्तरः, अबाह्यः, प्रज्ञानधन एव एतेभ्यः, भूतेभ्यः समुत्थाय तानि एव अनु विनश्यति, न प्रेत्य संज्ञास्ति** (बॅ उ.४/५/१३) इस श्रुति वाक्य में परममुक्ति का निरुपण इस प्रकार कितने ही लोकतामसी बुद्धि को लेकर कहते हैं यह ठीक नहीं है, कारण कि इस श्रुति वाक्य में तो सुषुप्ति अर्थात् गाढ़ निद्रा में जीव की जो स्थिति है उसका वर्णन है। इस वाक्य में परम मुक्ति का निरुपण है इस प्रकार की मान्यता तो अज्ञान को लेकर है ।

७. ' इसलिये (इस प्रकार की बात को ध्यान में लिये बिना (शास्त्र विहित साधनों द्वारा) जिसको ब्रह्म ज्ञान (इसको इसी जीवन में) हुआ है उसका कर्तव्य क्या इसका निरूपण प्रथमपाद में है। और यह कर्त्तव्य श्रवणादि साधनों को चालू रखने में यही है, कारण कि (छादोग्य उपनिषद् में उद्दालक आरुणि ने अपने पुत्र श्वेत केतु को एक ही बार नहीं, किन्तु) नो वार '**तत्वमसि**' इस वाक्य का उपदेश किया है।

८. (तदुपरान्त, इसके लिये ) कारण भी है,चांवल के छिलकों में से अलग पड़ जाने तक इसको कूट कूटकर अलग करना होता है (उसी तरह जब तक ब्रह्म का साक्षात् दर्शन नहीं हो ब्रह्म तक श्रवण

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

आदि कर्म करना होता है) कारण कि जिस प्रकार खांडना यह छिलकों से चांवल के कण अलग करने के लिये है उसी प्रकार। श्रवणादि साधन ब्रह्म के साक्षात्कार के लिये है।

श्रवण आदि साधन चालु रहे तो पर ब्रह्म जीवात्मा की सच्ची आत्मा है इस प्रकार की बुद्धि दृढ़ होती है।

९. एक को इस प्रकार जीवात्मा और परमात्मा एक है ऐसी दृढ़ बुद्धि हुई (पीछे भले ही इसका साक्षात्कार नहीं हुआ तो भी) यह बात दूसरों को समझने और समझाने की है। प्रतीक उपासना करने वाले और इस तरह के दूसरों के (जीवात्मा और परमात्मा एक है) इस प्रकार की दृढ़ बुद्धि नही होती। टिप्पणी-उपनिषद् में कितनी ही उपासनाएं आती है जिनको प्रतीकोपासना कही जाती है और जिसका फल लौकिक काम पूर्ति है। ब्रह्म ज्ञान नहीं, दृष्टान्त ।ॐ इत्येतदक्षरमुद्गीथमुपासीत। आपयिता वैमु कामानां भवति य एतदेवं विद्वान् अक्षरमुद्गीथमुपासीत' (छा.उ. १/१/१/और ७) यहां उद्गीथ एक प्रकार का सामवेद का गीत है।उपासको को ॐ-कार को उद्गीथ मानकर इसकी उपासना करनी,और इस प्रकार यह उपासना करे तो इसकी सभी लौकिक कामना पूर्ण हो। यह बात सत्य है परन्तु मोक्ष प्राप्ति में कारणभूत जीवात्मा परमात्मा एक है इस प्रकार का ब्रह्मज्ञान इस प्रकार के उपासक को प्राप्त नहीं होगा ।

१०. अब (इस तरह के ॐ-कार में उद्गीथ-बुद्धि के बदले ब्रह्म बुद्धि को रखे और इस रीति से ॐ-कार को) ब्रह्म बुद्धि का आधार बनावे, तो यह उत्तम बात हुई, उस प्रकार फिर दिव्य अर्थात् सूर्य आदि में ब्रह्म बुद्धि रखे तो यह ब्रह्म ज्ञान का अंग बनता है, पूर्ण ब्रह्म ज्ञान स्वयं नहीं।

**टिप्पणी-** परिमित वस्तु में दूसरी परिमित वस्तु की भावना यह प्रतीकोपासना और परिमित वस्तु में अपरिमित ब्रह्म की भावना यह ब्रह्म दृष्टि, प्रतीकोपासना करते ब्रह्म दृष्टि सत्य के अधिक निकट है। यह ब्रह्म दृष्टि लोटे के गंगाजल में गंगा जल की भावना जैसी हुई, इस प्रकार की ब्रह्म दृष्टि पूर्ण ब्रह्म दृष्टि के प्रथम सीढ़ी के रूप में है।

११-१२. अब मनन और निदिध्यासन अंग के कितने ही विशेष संबंध का निरूपण किया गया है (योग के) आसन आदि छः अंगों द्वारा श्रुति प्रतिपादित सिद्धांत मन में दृढ़ करना, और यह कार्य पूर्ण ब्रह्म ज्ञान हो वहां तक अथवा जहां तक जीवे वहां तक साधन को चालु रखना, तो इससे सिद्धि अर्थात् जीवन्मुक्ति प्राप्त होगी।

जीवन्मुक्ति प्राप्त होने के पश्चात् पाप-पुण्य का भय नहीं रहता यह बात निर्विवाद है।

१३. अग्निहोत्र आदि तो (इस प्रकार जीवन्मुक्त को भी चालू रखना है) इन साधनों का 'फल रूप (ब्रह्म-साक्षात्कार/हो तभी इसका मिलाप अपने आप छुटता है) इन्हें छोड़ने नहीं पड़ते। और (इस भांति अग्निहोत्रादि बराबर किये जावे तो) छः प्रकार से परमात्मा प्रकट हो और इसके पश्चात् प्रारब्ध

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

पूरा होने पर फल अर्थात् मोक्ष मिले। टिप्पणी परमात्मा के छः प्रकार के प्राकट्य के स्वरूप का श्री वल्लभाचार्य के तत्त्वार्थ दीप निबंध एवं सर्व निर्णय नाम के दूसरे प्रकरण में नीचे के श्लोक तथा यह ऊपर का ' प्रकाश ध्यान में लेने पर समझेंगे।

**अग्निहोत्रं तथा दर्शपूर्णमासः पशुस्तथा/चातुर्मास्यानी सामश्च क्रमात् पंचविधोहरिः ।।२।। ज्ञानिनस्तदभि व्यक्तो कर्तुर्मोक्षः क्रमात् भवेत्।। पुरुषो विहितः षोढा करौ पादौ शिरोऽन्तरम् शिरो ब्रह्म हरिः, पूर्वयज्ञः पंच विधः स्वयम्।।३२।। प्रकाशः भगवदानन्दा रूपं फलं ब्रह्मज्ञानयुक्तस्य यथोक्तकर्म कर्तुरेव। ब्रह्म ज्ञानाभावेतु पंचात्मकाद् भगवतः स्वर्गसुखं भवति।।''**
अग्निहोत्रादि वेद विहित कर्म बराबर वेद विधि अनुसार होने चाहिये। इतना ही नहीं, वे वे कर्म भगवतद्रूप है इस तरह की भावना भी साथ में होनी चाहिए, तभी मोक्ष मिले नहीं तो नहीं।

१४-१५. पहले पाद में सूत्रकार इस प्रकार निर्णय करके बताते है, दूसरे पाद में जीवन्मुक्त का देह छूटे तब इसकी सभी इन्द्रियों का जिस प्रकार लय होता है, उसका निरुपण किया गया है। उसके पश्चात् नाडी द्वारा इसका सूक्ष्म शरीर किस रीति से (स्थूल शरीर में से) बाहर निकलता है इसका निरुपण है। इस प्रकार का जीवन्मुक्त उत्तरायण में देह छोड़े, (परन्तु मोक्ष और इस स्थिति की नित्यता ही इसको प्राप्त होगी)।

१६-१७. तीसरे पाद में क्रम मुक्ति के संबंध में श्रुत्यनुसार कौन सा जीव किस मार्ग से जाता है इसका निर्णय है। (यह अमुक निश्चित मार्ग से ही जाता है) दूसरे से नहीं, इस बात का भी वहां निरुपण है। यह जीव पर ब्रह्म को ही प्राप्त करता है, ब्रह्म लोक को नहीं। चौथे पाद में, पुष्टिमार्ग में क्या फल और मर्यादा मार्ग में क्या फल इसका निरुपण है।

१८. (प्रकारों के भेद से) फलरूप तो प्रभु स्वयं ही है। प्रभु (सर्वथा) दोष रहित है इस बात का भी यहां निरुपण किया गया है। लीला नित्य है, इसलिये प्रभु सर्वथा पूर्णगुण है। (इस कथन का भी यहां निरुपण है)।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

# श्रीवल्लभाचार्य-प्रकटित कारिकाएं

## १ आवृत्यधिकरण

यह चौथा अध्याय है तो फलाध्याय (अर्थात् इसमें फल के साथ संबंध रखने वाली बातों का ही निरुपण करने का है, साधनों का नहीं, इस प्रकार फिर श्रवणादि निरूपण किस प्रकार है ? इस प्रकार किसी को शंका हो तो इसका उत्तर है कि, श्रवणादिसाधनों का फल और अतिनिकट संबंध रखने वाले हैं यह बतलाने (इन साधनों का निरुपण और) इन अंगों का विचार प्रारम्भ के दो सूत्रों में आया है।

## आवृत्तिरस कृदुपदेशात् ।४।१।१।

(सूत्रार्थ) (श्रवणादिसाधन) बारंबार करना चाहिए, कारण कि (उपनिषद में) उपदेश (एक बार नहीं, परन्तु) अनेक बार किया गया है।

सूत्रार्थ- (संशय) (आत्मा वारे द्रष्टव्यः श्रोतव्योमन्तव्यो निदिध्यासितव्यः) (बृ.उ. ४।५।६) (अर्थात् परमात्मा का साक्षात्कार यह (वेदान्त दर्शन का) लक्ष्य है, और (इस लक्ष्य सिद्धि के लिये/ परमात्मा संबंधी बात सुननी चाहिये, इसके ऊपर विचार करना चाहिये, और पीछे (एक परमात्मा पर) मन केन्द्रित करना चाहिये। इस प्रकार के (श्रुति) वाक्य श्रवणादि साधनों का विधान करते हैं, तो प्रश्न यह उपस्थित होता है कि इन साधनों का एक बार उपयोग करने से काम होता है या यह बार बार करना चाहिए ? (और इस प्रश्न का) उत्तर क्या ?

(पूर्व पक्ष) (इन साधनों का एक ही बार उपयोग करना कारण कि शास्त्र में कही बात को इस प्रकार करने से पूर्णता हो जाती है।

(एक देश) जिस प्रकार शाल खांडने का प्रयोजन चांवल के कणों को छिलकों से अलग करने का है (इसलिये यह चांवल के कण छिलकों से अलग नहीं हो वहां तक खांडना चालु रखना पड़ता है) इस प्रकार श्रवणादि साधनों का प्रयोजन ब्रह्म का साक्षात्कार है। (अर्थात् इनसे ब्रह्म का साक्षात्कार नहीं हो वहां तक इनको चालु ही रखना यही उचित है।

(पूर्व पक्ष) इस प्रकार कहना ठीक नहीं, कारण कि खांडने का प्रयोजन चांवलों को छिलकोंसे अलग करना यह तो सभी कोई (इसी जन्म में/देख सकते हैं, अर्थात् इस संबंध में भले चांवल सभी छिलकों से पूरी तरह से अलग नहीं हो वहां तक खांडने का चालु रखना पड़ता है, परन्तु श्रवणादि साधन तो शास्त्र विहित है, और शास्त्र विहित संबंध का फल सौ मे से किसी एक को इसी जन्म हो सकता हैं इस प्रकार श्रद्धा रखकर ये यज्ञादि जिस प्रकार एक ही बार करने में आते है, बार बार करने में नहीं आते, उस तरह श्रवणादि साधनों का फल ब्रह्म साक्षात्कार ये साधन एक बार करने से दूसरे

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

जन्म में मिलेगा। (इस प्रकार श्रद्धा रखकर ये साधन भी एक ही बार करना है। इसलिये यह श्रवणादि साधन बार बार करना चाहिये, इस प्रकार मानने के लिये कोई कारण मिलता नहीं है।

(सिद्धान्त) इस प्रकार कोई कहता हो तब इसका उत्तर इस प्रकार है, (श्रवणादि साधन अनेक बार करना ऐसा श्रुति का मत है, कारण ? ( इसका कारण यह है कि श्रुति में श्रवणादिसाधन के लिये) उपदेश (एक ही बार नहीं, किन्तु) अनेक बार किया गया है) छान्दोग्य उपनिषद में श्वेत केतु उपाख्यान है उसमें **'ऐतदाम्त्यमिदं सर्वं, तत्सत्यं स आत्मा, तत् त्वमसिश्वेतकेतो'** (छा.उ। ६।८।७) इस वाक्य द्वारा जडजगत् जीव ब्रह्मस्थरूप है इस बात का उपदेश नो बार किया गया है। जो एक ही उपदेश द्वारा हुए एक ही बार के श्रवण से/काम हो जाये। इस प्रकार हो तो एक ही व्यक्ति को एक ही समय एक ही बात नो बार नहीं कही जाती। एक ही उपदेश द्वारा काम पूरा हो जाता हो तो अनेक बार उपदेश करने के लिये कोई भी कारण नहीं रहता। इसको इस तरह समझाते हैं कि खांडने का प्रयोजन देखने में जिस तरह छिलकों को दूर करना है उसी प्रकार बारंबार करने में आये श्रवणादि का फल अन्तःकरण के दोष दूर करना हैं और अन्त में जो श्रवण उसका फल ब्रह्मसाक्षात्कार है।

इसी कथन का समर्थन करने के लिये सूत्रकार अब दूसरा हेतु कहते हैं।

## आवृत्तिरस कृदुपदेशात् ।४।१।१।

(इस सूत्र का अर्थ दूसरी प्रकार से नीचे दिये प्रमाण से हो सकता है।)

(सूत्रार्थ) कर्ममार्ग में पुनः पुनः जन्म लेना और पुनः पुनः मरना (यह फल है) कारण कि/ कर्ममार्ग में इस प्रकार का पुनः पुनः आवागमन होता है। यह बात (श्रुति में) बारबार कही गयी है।

(सूत्रभाष्य) सिद्धांत कर्म ज्ञान और भक्ति पुरुषार्थ अर्थात् मोक्ष प्राप्ति के साधन है इस प्रकार श्रुति कहती हैं । इनमें से भक्ति सीधे सीधे मोक्ष प्राप्ति का साधन है उपरान्त भक्ति उत्तमाधिकारी के लिये है, ज्ञान यह मध्यमाधिकारी के लिये है, और कर्म यह हीनाधिकारी के लिये है, इस प्रकार का निरुपण भी श्रुति में है। अब इन साधनों का स्वरूप (सूत्रकार) महर्षि बादरायण ने तीसरे अध्याय में विस्तार से बताया है और इन तीनों के फल का विचार सूत्रकार ने इस चौथे अध्याय में किया है। यह फल विचार अंग प्रथम निरुपण कर्ममार्ग के फल का है और ये बतलाने से कि कर्म मार्ग का फल उत्तम है और भक्ति मार्ग का फल अत्युत्तम है, इसलिये कर्म मार्ग का आश्रय ये दोनों मार्गो का यह उपकारक हो सकता है अर्थात् इसलिये करना है। नहीं कि इसके अपने लिये, (कारण कि कर्म मार्ग का फल पुनर्जन्म है ऐसा श्रुति ने बार बार कहा है। शेष कर्म मार्ग का फल पुनर्जन्म है यह जो कहा है। उसके संबंध में प्रमाण क्या ? तो इसका उत्तर यह है कि **'असकृदुपदेशात्'** अर्थात् कर्ममार्ग का फल पुनर्जन्म है ऐसा श्रुति ने बारबार कहा है, शेष कर्म मार्ग का फल पुनर्जन्म है इस प्रकार एक बार कहने से भी यह बात तो समझाई जा सकती है, इस प्रकार फिर यह बात बारबार किसलिये कही ? (इस

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

बारंबार कथन से अपने कर्ममार्ग पुर्नजन्म बारंबार होता है इस प्रकार नहीं समझें तो) इस प्रकार बारंबार में कहना निरर्थक हो जाये इसलिये इस प्रकार के बारंबार कथन से अपने को समझना है कि कर्ममार्ग का फल पुनर्जन्म भी बारंबार होता है। वाजसनेयि-शाखा (बृहदारण्यक उपनिषद्) कहा है **'एवमेव अयं शारीर आत्मा एभ्यः अंगेभ्यः पुनः प्रतिन्यायं प्रतियोनि आद्रवति प्राणायैव/** अर्थात् इसी प्रकार इस शरीर में रहने वाला जीवात्मा इस (शरीर के) अंगों में से अलग होकर अपने पाप पुण्यानुसार (नवीन) शरीर की ओर पुनर्जीवन प्राप्त करने के लिये ही दौड़कर जाता है। उस प्रकार फिर इसी स्थान पर '**तेन प्रद्योतेन एष आत्मा निष्क्रामति**' अर्थात् जब जीव स्व शरीर छोड़कर दूसरे में जाते समय आता है तब इसके हृदय के अग्रभाग में एक चमक होती है, और इस चमक के साथ यह जीव शरीर के बाहर निकल जाता है, इस प्रकार प्रारंभ करके कहा है कि '**एवमेवायं पुरुषः इदं शरीरं निहत्य अविद्यां गमयित्वा अन्यन् नवतरं कल्याणतरं रूपं तनुते पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वा अन्येभ्यो वा भूतेभ्यः**' अर्थात् इस जीव ने प्राप्त की। विद्या इसके द्वारा किये पाप पुण्य, और इसका यह जन्म पहले के जन्मों में प्राप्त की बुद्धि (यह सभी) इसके साथ साथ जाती है। इस स्थान पर फिर ये पीछे शीघ्र (आव) अर्थात् जिस प्रकार घास पर का कीड़ा (चलते समय अगले भाग से घास को एकमात्र मजबूत रीति से पकड़ पिछले भाग को सिकोड़कर आगे के पकड़े घास के भाग को छोड़ देता है, उसी प्रकार प्रारंभ में कहा है कि '**एवमेवायं पुरुषः इदं शरीरं निहत्य अविद्यां गमयित्वा अन्यन् नवतरं कल्याणतरं रुपं तनुते पित्र्यं वा गान्धर्वं वा बाह्मं वा प्राजापत्यं वा दैवं वा मानुषं वा अन्येभ्यो वा भूतेभ्यः**' अर्थात् घास के कीड़े की तरह ही यह जीव इस शरीर को त्यागकर, बेभान बनाकर दूसरा वस्तुतः नया सुखद शरीर धारण करता है, भले ही पीछे ये पितृलोक में हो, गन्धर्व लोक में हो, ब्रह्मलोक में हो प्रजापति लोक में हो मनुष्य लोक में अथवा किसी दूसरे प्राणियों में से किसी एक में हो और यह अगला स्थल कहा गया है कि '**प्राप्यान्तंकर्मणस्तस्य यत् किं चेहं करोत्ययम्/तस्माल्लोकात् पुनरेति अस्मै लोकायकर्मणे**' अर्थात् इस लोक में जो कुछ पुण्य पाप किये हो उसका फल परलोक में भोगकर पीछे उस लोक में से इस लोक में नवीन कर्म करने आता है। इस बात का समर्थन करते नये हेतु का निरुपण करते हैं ।

## लिङ्गाच्च।४।१।२।

(सूत्रार्थ) इस बात का समर्थन करने वाले स्मृति वाक्य है इसलिये भी ।

(सूत्रभाष्य) (सिद्धांत) जिस प्रकार धुएं को देखकर अग्नि का अनुमान किया जा सकता है, और इस धुवें के लिये पारिभाषिक शब्द (लिंग) है उस प्रकार/स्मृति वाक्य के आधार पर तदर्थ प्रतिपादक श्रुतिवाक्य भी है इस प्रकार का अनुमान किया जा सकता है । अर्थात् इस स्मृति के लिये पारिभाषिक शब्द (लिंग) उपयुक्त है। और ये स्मृति वाक्य भगवद् गीता में (**एक**) **त्रैविद्या मां**' इस प्रकार प्रारंभकर अर्थात् वेदोक्त यज्ञादि धर्म का सकाम अनुसरण करने वाले जीव आवागमन किया

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

करता है, इस प्रकार है, और (दूसरा) **'आब्रह्म भुवनाल्लोका पुनरावर्तिनोर्जुन'** अर्थात् हे अर्जुन, ब्रह्मलोक तक तो जीवों का आवागमन चालु ही रहता है इस प्रकार है अथवा 'यथाकारी यथाचारी तथा भवति, साधुकारी साधु र्भवति पापकारी पापो भवति, पुण्यः पुण्येन कर्मणा भवति पापः पापेन' अर्थात् जिस प्रकार काम और जैसा आचरण उस प्रकार दूसरा जन्म हो, अच्छा करने वाला अच्छा हो, पाप करने वाला पापी हो, पुण्य करने से मनुष्य (दूसरे जन्म में) पुण्यकारी बनते हैं और पापाचरण से मनुष्य (दूसरे जन्म में) पापी होता है। इस प्रकार का श्रुति वाक्य अर्थात् वर्तमान् जन्म और कर्म ऊपर से बीते जन्म में कर्म कैसे थे इसका अनुमान किया जा सकता है। ऐसा बताते हैं, इसलिये कर्ममार्गी को दूसरा जन्म लेना होता है इस प्रकार समझा जाता है। इस प्रकार अर्थ करे तो 'लिंग' शब्द का अर्थ इस जन्म के कर्म पूर्व जन्मों के कर्मों का अनुमापक है इस तरह का निरुपण श्रुति में है इस प्रकार समझाया है।

निवृत्तमार्गी अर्थात् निष्काम कर्म करने वाले जो मनुष्य उसके द्वारा किया कर्म इसके ज्ञान प्राप्ति में उपयोगी होता है इतना नहीं, परन्तु इसका संसार में आवागमन बंध करता है ऐसा नहीं कारण कि इसके लिये (श्रुति अथवा स्मृति में) कोई प्रमाण नहीं मिलता। अर्थात् कर्म मार्ग का फल पुनः पुनः जन्म लेना है ।

**आत्माधिकरण-**

ऊपर मुख्य कर्ममार्ग के फल का विचार कर (निर्णय दिया) अब ज्ञान मार्ग में किस प्रकार का फल मिले इसका विचारकर सूत्रकार निरूपण करते हैं ।

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च।४।१।३

सूत्रार्थ- (ज्ञानमार्गी जीव भगवान् अपनी) आत्मा है इस प्रकार का ज्ञान प्राप्त करते है और (इस प्रकार दूसरे को) उपदेश भी देते हैं ।

(सूत्रभाष्य) कर्म मार्ग का फल संसार में बारंबार आवागमन है इस प्रकार जो' पहले कहा वह कथन (ज्ञानमार्ग में) नहीं यह बात बताने के लिये (सूत्र में 'तु') शब्द (दिया) है ।

ज्ञानमार्गी भगवान् अपनी आत्मा है इस प्रकार समझकर उपासना करते हैं । अनेक जन्म में यह उपासना निरन्तर चलती रहती है अर्थात् इनके हृदय में भगवान् भी आत्मा के समान प्रतीत होते है, इस समय भगवान् का आनंदांश भी प्रकट होता है अर्थात् ज्ञानीभगवद्रूप बनजाता है, और भगवान् अपनी आत्मा के समान इनको प्रतीत होता है अर्थात् आत्मानन्द रूपी बनकर ये भगवान् का अनुभव करते है और इस स्थिति को प्राप्त करने के पश्चात् प्रारब्ध कर्म पूरा होने पर देह नाश होने पर यह आत्मरूप भगवान् में लीन होता है (उपरान्त भगवान्) सभी के ऊपर एक समान उपकार करने वाले हैं अर्थात् भगवान् ने जो ज्ञान दिया है वह (केवल अपने लिये ही नहीं परन्तु) दूसरों के लिये भी है, अर्थात् 'इन अंगों का, उपदेश भी अपने को कृतार्थ करने वाला 'अपना परम धर्म, है 'इस प्रकार समझकर योग्य

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

जीव सामने आता है तब इसको इस प्रकार उपदेश भी देते हैं।

यही कथन सूत्र में (आत्मा) इत्यादि शब्दों में कही है । (उप) समीप और गमन–प्रवेश 'अर्थात् भगवान् अपनी आत्मा है इस प्रकार समझकर इसमें एकरूप बनता है और सर्वथा लय होता है इसके पहले अधिकारी शिष्यों को इस प्रकार अर्थात् भगवान् अपने सभी की आत्मा है इस प्रकार का उपदेश भी देते हैं।

**अथवा-**

(सूत्र भाष्य) 'संशय, कर्ममार्ग में फल आवृत्ति (अर्थात् संसार में बारम्बार आगमन) है इस प्रकार जो कहा उसके लिये ज्ञान और भक्ति का फल अनावृत्ति 'अर्थात् इस प्रकार का आवागमन मिटकर अनुक्रम से नित्यअक्षर ब्रह्म और पुरुषोत्तम के साथ का संबंध प्राप्त हो' इसलिये यह उत्तम और कर्म उत्तम नहीं, इस संबंध में एक प्रश्न पैदा होता है, **'न स पुनरावर्तते'** अर्थात् मुक्त जीव को संसार में पुनः नहीं आना पड़ता–इस प्रकार का श्रुतिवाक्य जो अनावृत्ति 'अर्थात् संसार में फिर नहीं आना इसका निरुपण करते हैं वह अनावृत्ति देवों की अमरता की तरह काम चलाऊं है कि निश्चित है ?

'टिप्पणी'– **'अपाम सोमममृताभवेम'** अर्थात् हमने सोम रस का पान किया है इस लिये हम अमर होगें, इस वेद वाक्यानुसार जो अमरता प्राप्त होती है वह अस्थिर या स्थिर। इस प्रकार का कोई प्रश्न करे तो इसका उत्तर यह है कि, हमेशा के लिये मानिये, तो 'क्षीणे पुण्ये मर्त्य लोकं विशन्ति' अर्थात् पुण्य पूरे होते ही फिर मृत्यु लोक में आना पड़ता है, इससे गीता वाक्य में बाध आता है, इसलिये इसको हमेशा के लिये नहीं मानना, तब फिर इनको अमरता किसलिये कही ? इस प्रकार कोई प्रश्न करे तो इसका उत्तर यह है कि मनुष्य तो आये और मृत्यु को प्राप्त हुए, सुदीर्घ जीवन क्या है ये जानते ही नहीं, इनकी अपेक्षा ये देवों की स्वर्ग में, स्थिति अर्थात् सभी दीर्घकाल तक होते है, इनको तो लोक अजरामर ही कहते है' 'तब फिर इस प्रकार के कर्म और ज्ञान के फल रूप जो अनावृत्ति है इसको निरन्तर या अस्थिर कैसे मानना ।

(पूर्वपक्ष) अस्थिर ही है, क्योंकि 'यह जन्म मिला वह पूर्व कर्म बिना नहीं मिलता है अर्थात्' पूर्व कर्म तो तारते हैं (अर्थात् अनावृत्ति हमेशा मानने वाले) को भी मानना ही पड़ता है, और कर्म का स्वभाव ही ऐसा है कि एक कर्म दूसरे को जन्म देता है और दूसरा तीसरे को और यह स्वभाव दूर करने पर भी दूर नहीं होता है। (यह कर्म सर्वथा निर्मूल नहीं होता है तो) इसका भोग चालू रहने का ही है अर्थात् 'भले ही जिस प्रकार सोमरसपान के प्रभाव से पुनः भूमि पर शीघ्र ही पुनः आने का नहीं होता है और बहुत लम्बे समय तक इस प्रकार हो इस प्रकार ज्ञान और भक्ति के प्रभाव से भी शीघ्र संसार में पुनः आने का नहीं हो, परन्तु बहुत ही लम्बे समय ऐसा हो इतना ही, परन्तु इस अनावृत्ति को हमेशा तो नहीं माना जा सकता है।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

है। (यह पितृयान मार्ग, अर्थात् जिस तरह का देवयान मार्ग से जाता है उनका पुनर्जन्म नहीं होता, परन्तु) जो पितृयान मार्ग से जाता है उनका पुनर्जन्म होता है ।

**यत्र काले त्वनावत्तिमावृत्तिं चैव योगिनः।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतवर्षभ।।**
**अग्निज्योर्तिरहः शुक्लः षण्मासाः उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः।।**
**धूमो रात्रिस्तया कृष्णःषण्मासादक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्यनिवर्तते।।**
**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्ति मन्यया वर्तते पुनः।।'**

(भ.गी.८।२३।२४।२५) इन श्लोक में इस प्रकार कहा गया है कि जिस समय यह लोक छोड़ने पर पुनः जन्म नहीं लेना पड़े और जिस समय इस प्रकार करने पर पुनः जन्म लेना पड़े उस समय के विषय में श्रीभगवान् अर्जुन आगे स्पष्ट करते है, जब अग्नि प्रज्जवर्लित हो, तब दिन होता, जब शुक्ल हो तब उत्तरायण हो, इस समय में जिसकी मृत्यु होती है वे ब्रह्मज्ञानी लोक ब्रह्म प्राप्त करते है और इसका पुनः जन्म नहीं होता है। इसका नाम शुक्ल गति, जब अग्नि में से धूम निकलता हो, जब रात हो, जब कृष्ण पक्ष हो, जब दक्षिणायन हो, इस समय जिसकी मृत्यु हो वह योगी चन्द्रलोक में जाकर यथा पुण्य वहां रहकर, पुण्यक्षय होने पर पुनः इस लोक में जन्म लेते हैं, यह कृष्ण गति है ।

काल विशेष मृत्यु यातायातादि में एक निर्णायकतत्व है इस बात को भीष्मपिताह छः मास शरशय्या में रहकर उत्तरायण होने के पश्चात् स्वदेह को छोड़ा यह प्रसंग पुष्टि करता है ।

अब, उपनिषद में जो कहा गया है वह अतिस्पष्ट है, परन्तु गीता में जो कहा गया है उस संबंध में प्रश्न पूछ सकता है यह विधान किसके संबंध में है । प्रथम श्लोक द्वारा स्पष्ट दिखता है कि इन भीष्मपितामह जैसे इच्छामृत्यु योगी के संबंध में ही यह विधान है । यह तो योगी की इच्छा हो कि मेरे को पुनः जन्म नहीं लेना पड़े तो इसको शुक्लगति का आश्रय करना और इसकी इच्छा होती है कि मेरे को पुनः भूतल पर आना है तो इसको कृष्णगति का आश्रय लेना हैं । उपरान्त इस प्रकार के योगी ने यह ब्रह्म ज्ञान प्राप्त किया हो तभी इसको ब्रह्मप्राप्ति हो, नहीं तो नहीं, सूत्रकार का अभिप्राय भी ऐसा ही मालुम पड़ता है, परन्तु श्रीविठ्ठलेश आगे बढ़कर कहते हैं कि श्रुति का अनुसरण कर इस श्लोक में वर्णित काल उन उन लोक का वाचक होता तो शुक्ल गति यह देवयान और कृष्णगति यह पितृयान, तब फिर प्रस्तुत पूर्व पक्ष को स्थान नहीं इस संबंध में उत्तर पक्ष को भी स्थान है, या नहीं है ?

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

**।।ब्रह्मसूत्राणुभाष्य चतुर्थाध्याय का द्वितीयपाद संपूर्ण।।**

# अथ चतुर्थाध्याये तृतीय: पाद: ।

## १ अर्चिराद्यधिकरणम् ।

### अर्चिरादिना तत्प्रथिते: ॥४।३।१॥

ननु ज्ञानमार्गीयस्येव मर्यादामार्गीयभक्तस्याप्यर्चिरादिमार्गेणैव गमनम् । उत सद्योमुक्तिरेव भवतीति संशय: । तत्र यथा ज्ञानिनो नियमाभावस्तथात्रापीति प्राप्त आह । अर्चिरादिमार्गेण तस्य ज्ञानमार्गीयस्यैवोत्कर्षकथनात् स एव तेन मार्गेण गच्छति न तु भक्तोपीत्यर्थ: । तथाहि । पञ्चाग्निविद्याप्रकरणे-तद्य इत्थं विदुर्ये चेमेरण्ये श्रद्धा तप इत्युपासते तेर्चिषमभिसंभवन्त्यर्चिषोहरहरापूर्यमाणपक्षम् (छां.५।१०।१) इत्यत्रोपक्रमे भक्तातिरिक्तानेवाधिकृत्य तथा गतिरुच्यते । स्मृतावपि अग्निर्ज्योतिरह: शुक्ल: (भ.गी.८/२४) इत्यत्र ब्रह्मविदो जना इति वचनेन ज्ञानमार्गीयस्यैव स पन्था इत्युच्यते । अथेदं चिन्त्यते । सामोपनिषत्सु पठ्यते । अथ या एता हृदयस्य नाड्यस्ता: पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्य: पिङ्गल: (छां.८।६।१) इत्युपक्रम्यादित्यरूपस्य पिङ्गलस्य रश्मिरूपत्वं नाडीनामुक्त्वाग्रे वदति । अथ यत्रैतदस्माच्छरीरादुत्कामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते (छां.८।६।५) इति नाडीरश्मिसंबन्धेनैका परलोकगति: श्रूयते । अर्चिरादिका चान्या तेर्चिषमभिसंभवन्त्यर्चिषोह: । (छां.५।१०।१) इत्यादिश्रुत्युक्ता । स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छति (कौ.१।३) इति चापरा । स यदा वै पुरुषोस्माल्लोकात्प्रैति स वायुमागच्छति (बृ.५।१०।१) इति चेतरा । सूर्यद्वारेण ते विरजा: प्रयान्ति (मुं.१।२।१३) इति चान्या । एवमनेकेषु मार्गेषु सत्स्वर्चिरादेरेवोक्ति कुत इति। तत्र सर्वेषां पारिभाषिकमर्चिरादित्वमत एव-अथैतयो: पथो: कतरेणचन (छां.५।१०।८) इति मार्गद्वयभ्रष्टानामतिकष्टं-जायस्व म्रियस्वेति तृतीयं स्थानम् (छां.५।१०।८) इत्युक्तमन्यथानेकेषां मार्गाणामुक्तानां श्रूयमाणत्वादस्य तृतीयत्वं नोच्येतात: प्रकरणभेदाद्भिन्नोपासनमशेषत्वान्मिथोनपेक्षा । भिन्ना एवैते मार्गा इति मन्तव्यमिति चेत्तत्रोच्यते । न हीयं परिभाषा सर्वेषु श्रुतास्ति ब्रह्मप्रापका

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

यतस्तथोच्येत । अतो लाघवादनेकपर्वविशिष्ट एक एव मार्ग इति मन्तव्यं नतु पर्वभेदेन मार्गभेद इति । गौरवप्रसंगात् । न चैवमथैतैरेव रश्मिभिरित्यवधारणानुपपत्तिरिति वाच्यम् । तस्याः श्रुतेरुत्क्रमणमात्रमार्गनिरूपकत्वात् । तथाहि । तत्रोपक्रमे हि-अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमते (छां.८।६।१) इत्युपक्रम्य पिङ्गलस्यादित्यत्वमुक्त्वा-तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेमुष्मिन्नादित्ये सृप्ता इत्यन्तेन वाक्येन नाडीषु रश्मिप्रचारमुक्त्वाग्रे अथ यत्रैतदस्मादित्याद्युक्तम् । उपसंहारे च-शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिः सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति (छां.८।६।६) इति । एवमुपक्रमोपसंहाराभ्यामुत्क्रमणमात्रमार्गनिरूपकत्वं न तु ब्रह्मप्रापकमार्गस्यातस्तदनुपपत्तिपरिहारो नर्थकः । नन्वनेकपर्वविशिष्टत्वेन मार्गस्यैकत्वे तं निरूपयन्ती श्रुतिः क्वचित् किंचित् पर्व निरूपयति । क्वचिन्नेति कथम् । उपसंहारेण प्राप्स्यत इति तात्पर्येण तथेति चेद् ब्रवीषि तदा शाखान्तरमविदुषस्तदसंभवेन तं प्रति श्रुतेर्न्यूनतापातः । न हि सर्वशाखाविदं प्रत्येव कथनमिति वक्तुमुचितम् । तस्यासंभवादतः स्वस्वशाखाज्ञानवन्तं प्रत्येव तथा । अध्ययनविधेरपि तावन्मात्रपरत्वात् । शाखान्तरसंवादिपर्वकथनानुपपत्तिश्च । उपसंहारेणैव तस्यापि प्राप्तिसंभवादतो विरुद्धदिकानां स्वस्वमार्गेणैकग्रामप्राप्तिवदिहापि भवितुमर्हति स्वातन्त्र्येण सर्वैर्मार्गैर्ब्रह्मप्राप्तिः । न चैवमथैतयोः पथोरिति द्विवचनानुपपत्तिर्जायस्व म्रियस्वेत्यस्य तृतीयत्वं चानुपपन्नमिति वाच्यम् । अर्चिरादिकमुक्त्वोपसंहरत्येष देवयानः पन्था इति । श्रुत्यन्तरे च-स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छति (कौ.१।३) इति । तथा च ब्रह्मप्रापकाः सर्वे मार्गा देवयाना इत्युच्यन्ते। दैवी संपद्विमोक्षाय (भ.गी.१६।५) इति भगवद्वाक्याद् दैव्यां संपदि ये जातास्ते देवा इत्युच्यन्ते तेषां यानं गमनं यत्रेति ते सर्वेपि मार्गा देवयानशब्देनोच्यन्ते । द्वितीयस्त्वविशिष्टः । एवं द्वित्वं त्रित्वं चोपपद्यते । न चोक्तरीत्या लाघवादेक एव स मन्तव्यः। स्वतः प्रमाणभूता हि श्रुतिः। सा येन यदा या

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

श्रुता तदर्थावधारणे द्वितीयस्या अनुपस्थितत्वान्न लाधवगौरवतद्विचारावसरः । क्वचिदुपस्थितौ चोक्तबाधकैरुपसंहारानवकाशः । अपरं च ब्रह्मविदः कममुक्तौ गन्तव्यो मार्गो ह्यमुपदिश्यते । तत्तल्लोके तदानन्दानुभश्चावश्यकः । तथा चोपासनभेदात् फलभेदस्यावश्यकत्वान्मार्गभेदोपि तथेति सर्वेष्वेकरूपफलप्रसञ्जक उपसंहारो न युक्तः। किंच । उपासने कर्मणि चोपसंहारः संमतः । मार्गस्तु नान्यतररूपोतो यस्योपासकस्य येन मार्गेण गमनं स मार्ग उपदिश्यत इति नोपसंहारो युक्तः । अविधेयत्वादपि तथा । एतद्यथा तथा पुरस्तान्निरूपतिम् - उपसंहारोर्थाभेदाद्विधिशेषवत्समाने च (ब्र.सू.३।३।५) इत्यत्र । एवं सत्यर्चिश्शब्देनार्चिरुपलक्षितो मार्ग उच्यते । आदिपदेनान्ये सर्वे मार्गाः संगृह्यन्त इति नानुपपत्तिः काचिदिति चेदत्र वदामः । अर्चिरादिभ्य इत्युक्तं भवेत् त्वद्रीतिरेव चेदभिप्रेता भेत्तस्मान्नैवमित्यवधार्यते । अर्चिरादिनेत्येकवचनान्यथानुपपत्त्या मार्गस्यैकत्वमवश्यमुररीकार्यम्। एवं सति श्रुतिषु यावन्ति पर्वाण्युक्तानि तानि सर्वाण्येकस्मिन्नेवार्चिरादिमार्गे वर्तमानान्यपि यस्योपासकस्य यावत्पर्वभोगो भावी तं प्रति तावत्पर्वोक्तिर्यस्य यावतां तेषां स न भावी तं प्रति न तदुक्तिस्तद्भोगाभावादिति नानुपपन्नं किंचित् । ननु त्वयाप्यनुक्तानां पर्वणां तत्र स्थितिं वदतोपसंहार एवोक्तो भवति प्रापकत्वेनेति चेत् । स्यादेतदेवं यदि तस्यैव गन्तुर्भोगाय तदपि पर्व तत्रोच्येत । न त्वेवं किंत्वेकवचनानुरोधान्मार्गैक्ये निश्चिते यं प्रति यत्पर्वोच्यते तत्तत्र कण्ठोक्तमेवेति नोपसंहारापेक्षा । अग्रेन्यत्रोक्तानां पर्वणामुक्तस्थले संनिवेशोक्त्यापि सूत्रकाराभिमत एक एव मार्ग इति ज्ञायते । श्रुतौ सर्वत्र पूर्वपरामर्शदपि तथा ॥४।३।१॥

वायुमब्दादविशेषविशेषाभ्याम् ॥४।३।२॥

छान्दोग्ये वायुर्न पठ्यते । कौषीतकिश्रुतौ तु - स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् (कौ.१।३) इति वाय्वादयः श्रूयन्ते । तत्रार्चिषोग्नेश्चाभेदान्न

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

विचारणीयमस्ति । वायुलोकं कस्माल्लोकाद्गच्छतीत्याकाङ्क्षायामाह । वायुमब्दादिति । अर्चिषोहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाधान् षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यम् (छां.५।१०।२) इत्यत्र संवत्सरलोकात्परस्ताद्वायुलोको निवेशयितव्यस्तथा च संवत्सरलोकाद्वायुलोकं गच्छतीत्यर्थः । तत्र विनिगमकमाह । अविशेषविशेषाभ्यामिति ।

अत्रेदं ज्ञेयम् । अग्निहोत्रादिकर्मभिश्चित्तशुद्धावुपासनादिभिर्ज्ञानोदये क्रममुक्त्यधिकारी हि तत्तल्लोकं गत्वा मुक्त्वान्ते ब्रह्म प्राप्नोति । कर्मत्वग्निसाध्यं भूलोक एव च भवत्यत आदौ तत्रत्यो भोगस्ततस्तदुपरितनलोकानां- पृथिवी दीक्षा तयाग्निर्दीक्षया दीक्षितः । (तै.ब्रा.३।७।७) यया पृथिव्यग्निगर्भा (आ.सू. १।१३।५) इत्यादिश्रुतिभ्यो भूरग्निप्रधाना भवत्यतोर्चिराख्यमग्निलोकमादौ गच्छति ।

ततः कर्मोपासनयोरहरादिसंवत्सरान्ते काले विहितत्वात्तत्र तत्र गत्वा भुङ्क्ते । तथा च संवत्सरान्तानां भूसंबन्धित्वेनाविशेषात्तन्मध्ये वायोर्न प्रवेशः । भूलोकादुपर्यन्तरिक्षलोकस्तदुपरि द्युलोकस्तथा च वायुरन्तरिक्षस्याधिपतिः (तै.सं.३।४।५) इति श्रुतेः सूर्यो दिवोधिपतिः (तै.सं.३।४।५) इति श्रुतेस्तयोः पौर्वापर्ये विशेषो हेतुरस्तीत्यादित्यलोकात् पूर्वमुक्तरीत्या भूलोकमध्यपातिसंवत्सरस्य परस्ताच्च वायुर्निवेशयितव्य इत्यर्थः । ननु तेर्चिषमभिसंभवन्त्यर्चिषोहरित्यादिश्रुतिरुक्तमुक्तमनूद्यानूद्यापादानत्वं वदन्ती पूर्वोत्तरयोरव्यवधानं सूचयतीति नोक्तमादरणीयमिति चेत् । सत्यम् । यस्योपासकस्य न वायुलोकभोगस्तं प्रति सोक्तिर्यस्य तु तद्भोगस्तस्योक्तरीतिमार्गैक्यादिति नानुपपत्तिः काचित् । केचित्तु-स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकम् (कौ.१।३) इत्यविशेषेण वायुरुपदिश्यते । मिथः पौर्वापर्यप्रापकपदाभावात् । यदा वै पुरुषोस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति (बृ.५।१०।१) इति श्रुत्यादित्यात्पूर्वो वायुर्विशेषेणोपदिश्यत इत्यब्दादित्ययोरन्तराले

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

निवेशयितव्य इत्यर्थं वदन्ति । स चिन्त्यते । यथा तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छतीति विशेषोपदेश इत्युच्यते तथा स वरुणलोकमित्यत्रापि वक्तुं शक्यम्। न च स आदित्यमागच्छतीत्यत्र तच्छब्दस्य पूर्वपरामर्शित्वात् वायुलोकगतस्यैव पूर्वत्वात्तथेति वाच्यम् । अग्निलोकमागच्छति स वायुलोकं स वरुणलोकम् (कौ.१।३) इत्यत्रापि तुल्यत्वात् । किंचैवमग्निलोकानन्तरं वायुलोक इत्यपि वक्तुं शक्यमतो विद्वद्भिरुपेक्ष्योयम् । वाजसनेयिनस्तु मासेभ्यो देवलोकं देवलोकादादित्यम् (बृ.६।२।१५) इति पठन्ति। तत्राप्यादित्यात्पूर्वो देवलोकात्परो वायुर्ज्ञेयः । एकत्रादित्यात्पूर्वत्वे सिद्धे मार्गैक्यादन्यत्रापि तथात्वस्य न्यायप्राप्तत्वात् । सूत्रकारेण तु छान्दोग्यश्रुत्यपेक्षयोक्तं वायुमब्दादिति । एवं सति मासेभ्यः परस्तादब्दनिवेशनं कार्यम्। न च वायुमब्दादिति सूत्रान्मार्गभेदापत्तिः । देवलोकस्यादित्याधिष्ठेयत्वेनादित्यमध्यपातित्वमभिप्रेत्य छन्दोगश्रुतिस्तथोक्तवती । तदनुसारेण व्यासोप्यतो नानुपपत्तिः ॥४।३।२॥

## तडितोधि वरुणः संबन्धात् ॥४।३।३॥

आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम् (छां.४।१५।५) इत्यत्र पठितविद्युल्लोकात्परतो वरुणलोको निवेशनीयः। तत्र हेतुः । संबन्धात् । तडितोप्संबन्धित्वाद्वरुणस्य तत्पतित्वात्तथा ॥४।३।३॥

## वरुणाच्चाधीन्द्रप्रजापती ॥४।३।४॥

स्पष्टमिदम् । अर्चिरादिपाठे विद्युदनन्तरं तत्पुरुषोमानवः स एतान् ब्रह्म गमयति (छां.४।१५।५) इति पठ्यते । तत्र यस्योपासकस्य वरुणादिलोकगमनापेक्षा नास्ति तमपेक्ष्येति ज्ञेयम् । मार्गैक्यनियममभिप्रेत्य सूत्रकारोन्यत्रोक्तानामन्येषामपि लोकानां तत्रैव निवेशनमाह ॥४।२।४॥१॥

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

## २ आतिवाहिकाधिकरणम् ।

### आतिवाहिकास्तल्लिङ्गात् ॥४।३।५॥

विद्युदनन्तरं स तत्पुरुषोमानवः स एतान् ब्रह्म गमयतीत्यत्र भवति संशयः । उक्तश्रुतेर्गमयित्रैव ब्रह्मप्राप्तिरिति निश्चीयते । स च विद्युदनन्तरमेव पठयते । एवं सति यस्य वरुणादिलोकगमनं तस्य वचनाभावेन गमयित्रप्राप्तेर्ब्रह्मप्राप्तिर्भवति न वेति । तत्र वाचनिकस्य यावद्वचनत्वात्तदभावेन सा न भवतीति प्राप्त आह । आतिवाहिका इति । एतदुक्तं भवति । यस्योपासकस्य यावत्फलभोगानन्तरं ब्रह्मप्राप्तिर्भाविनी तस्य तावत्तद्भोगानन्तरं ब्रह्मप्राप्तिर्भवत्यत एव कौषीतकीश्रुतौ प्रजापतिलोकानन्तरं ब्रह्मलोकः पठ्यते । अन्यथा कृतसाधनवैयर्थ्यं तेषां ब्रह्मप्राप्तिसाधनत्वबोधकश्रुतिविरोधश्च स्यात् । तथा च यत्रातिवाहिकश्रुतिर्नास्ति तत्राप्यातिवाहिको भगवदीय एव ब्रह्म प्रापयतीति ज्ञेयम्। वस्तुतस्तु बहव एव तादृशाः सन्तीति ज्ञापनाय बहुवचनमत्रोक्तम् । तन्मध्ये कश्चनागत्यैक एव नयतीति ज्ञापनाय श्रुतावेकवचनम् । तत्र हेतुस्तल्लिङ्गात् । तत्पुरुषोमानव इत्यत्र ब्रह्मसंबन्धित्वं लिङ्गमुच्यते । तेनेदं ज्ञाप्यते यथा विद्याबलात् तत्तल्लोकप्राप्तिस्तथैव ब्रह्मप्राप्तिरपीति न किंतु भगवदीयपुरुषानुग्रहेणैवेति । न च पूर्वपूर्वलोकाधिष्ठातृदेवा उत्तरोत्तरलोकं प्रत्यातिवाहिका यथा तथा ब्रह्मप्राप्त्यव्यवहितपूर्वलोकदेवा एव ब्रह्मप्रापका इति तत्पदेन स लोक एवोच्यत इति वाच्यम् । तदेतरलोकेषु तदकथनं यथा तथात्रापि न कथयेत् । लोकाधिष्ठातृदेवानामातिवाहिकोक्तावर्चिर्लोकप्रापकातिवाहिकस्याभावात् तत्प्राप्तिर्न स्यात् । तथा सति देवयानमार्ग एवोच्छिद्येत । अतो यथा विद्याबलेनैवार्चिषः प्राप्तिस्तथेतरेषामपीति बुध्यस्व । कस्यचिदल्पलोकगत्यनन्तरमेव ब्रह्मप्राप्तिः । कस्यचिद् बहुलोकगत्यनन्तरं सोच्यत इति । भोगभूमित्वमेव तेषामवगन्तव्यम् । सर्वेषां सर्वत्र गमने देवयानं पन्थानं वदन्त्याः श्रुतेः सामितत्कथनमनुपपन्नं स्यादत उपासनाभेदेन फलभेदं ज्ञापयन्ती तथा वदतीति युक्तमुत्पश्यामः ॥४।३।५॥

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

ननु तेषामिह न पुनरावृत्तिरस्तीत्यादिश्रुतिभ्यो देवयानपथं प्राप्तानां पुंसां ब्रह्मवित्त्वमवश्यं वाच्यम् । तेन सद्योमुक्तौ संभवन्त्यां सत्यां क्षयिष्णुत्वेन क्षुद्रानन्दत्वेन च हेयानां परमफलप्राप्तिविलम्बहेतूनामर्चिरादिलोकानां कामना कुतो यतस्तद्धेतुभूतोपासनाः संभवन्ति । किंच । अर्चिरादिना तत्प्रथितेः (ब्र.सू.४।३।१) इत्यत्र यदुक्तं ज्ञानमार्गीयस्यैवार्चिरादिप्राप्तिर्न भक्तिमार्गीयस्येति तदप्यनुपपन्नम् । यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् (भा.११।२१।३२) इत्युपक्रम्य-सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा । स्वर्गापवर्गं मद्धाम कथंचिद्यदि वाञ्छति ॥ (भा.११।२१।३३) इति भगवद्वाक्याद्भक्तस्योप्येतद्वाञ्छाफले संभवतः। अन्यथा प्रभुर्न वदेत् । एवं सति भक्तिसुखं हित्वान्यत्र कामनायां हेतुर्वाच्य इत्याकाङ्क्षायां तमाह ।

उभयव्यामोहात्तत्सिद्धेः ॥४।३।६॥

अत्रेदं ज्ञेयम्। देवयानः पन्था अपि भगवतैव सृष्टोस्ति । तथा चोक्तहेतुभिस्तत्र कस्यापि कामनाभावे तत्सृष्टिर्व्यर्था स्यादतो भगवानेव कांश्च व्यामोहयति ज्ञानिनो मर्यादामार्गीयभक्तांश्चातस्तत्कामनासिद्धेस्तत्फलभोग इति । यत्त्वर्चिरादिमार्गगन्तृणां देहवियोगेन संपिण्डितकरणग्रामत्वेनास्वातन्त्र्यं व्यामोहः । अर्चिरादीनां चाचेतनत्वेनास्वातन्त्र्यं व्यामोहः। कार्यकरणासामर्थ्यमिति यावत् । तेनार्चिराद्यधिष्ठातृदेवैरतिवाह्यन्त इति सिद्धमिति व्याख्यानम् । तन्न साधीयः । व्यामोहशब्दस्यान्यथाज्ञानवाचकत्वेनासामर्थ्यावाचकत्वात् । तथा सत्यर्चिर्लोमपि न प्राप्नुयात् । प्रापकाभावादित्युक्तम् ॥४।३।६॥

ननु विद्युतो वरुणादिलोकप्राप्त्यनन्तरं यस्य ब्रह्मप्राप्तिस्तस्य तल्लोकसंबन्धी ब्रह्मपापकः पुरुषोस्त्युत स स्वत एव तत्प्राप्नोतीति संशय उत्तरं पठति ।

वैद्युतेनैव ततस्तच्छ्रुतेः ॥४।३।७॥

नहि ब्रह्मप्राप्तिर्विद्युल्लोकसंबन्धिपुरुषसामर्थ्येनोच्यते । किंतु ब्रह्मसंबन्धितत्सामर्थ्येन । तथा च यत एव लोकात्तत्प्राप्तिस्ततो ब्रह्मसंबन्धिपुरुषादेव।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

एवं सत विद्युल्लोकात्तत्प्राप्तौ यो ब्रह्मसंबन्धि पुरुषः प्रापक उक्तस्तेनैव ततो वरुणादिलोकेभ्योपि ब्रह्मप्राप्तिस्तत्र हेतुमाह । तच्छ्रुतेः तान् वैद्युतान्पुरुषोमानस एत्य ब्रह्मलोकान् गमयति (बृ.६।२।१५) इति श्रुतेः। अत्रैत्येति वचनाद्यत एव लोकाद् ब्रह्मप्राप्तिर्भवित्री तत्रैवागत्य ब्रह्म प्रापयतीति गम्यते । श्रुतौ वैद्युतं लोकमागत्य तस्माद् ब्रह्मलोकान् गमयतीत्युक्तमिति स पुरुषो वैद्युत इत्युच्यते न तु तल्लोकवासित्वेन । तथा सत्येत्येति न वदेत् तत एव ब्रह्मप्रापणे । अत एव मानस इत्युक्तः । भगवन्मनसि भवत्यथैनं मां प्रापयत्विति तदैव प्रापयतीति तथा ।

छान्दोग्ये त्वमानव इति पठ्यते । तच्चालौकिकत्वं तदप्युक्तरूपभेवेति न कश्चिद्विशेषः। वाजसनेयके ब्रह्मलोकान्गमयतीति पठ्यते । छान्दोग्ये तु ब्रह्मेति । तत्रायं भावः। भक्तं तु वैकुण्ठलोकं नयति ते बहुविद्या इति ब्रह्मलोकानित्युक्तम् । ज्ञानमार्गीयं त्वक्षरं ब्रह्म प्रापयतीति ब्रह्मेत्युक्तम् । अत एवोभयव्यामोह उक्त आचार्येण ॥ ४।३॥२॥

## ३ कार्याधिकरणम् ।

अत्र सिद्धान्तदार्ढ्यार्थमुक्तमर्थं हस्तपिहितमिव कृत्वा बादरिमतं पूर्वपक्षत्वेनाह ।

### कार्यं बादरिरस्य गत्युपपत्तेः ॥४।३।८॥

स एतान् ब्रह्म गमयति (छां.४।१५।५) इत्यत्र ब्रह्मपदेनाविकृतं परमेव ब्रह्मोच्यते । उत कार्यरूपो ब्रह्मलोक इति भवति संशयः। परस्य व्यापकत्वेन देशविशेषगमयित्रोरनपेक्षितयोरुक्तेः कार्यरूप एव स ब्रह्मपदेनोच्यत इति बादरिराचार्यो मन्यते। कुतः । अस्य गत्युपपत्तेः। तस्य परिच्छिन्नत्वेन तत्स्थितिदेशं प्रत्यस्य गन्तुर्गतेरुपपत्तेरित्यर्थः ॥४।३।८॥

### विशेषितत्वाच्च ॥४।३।९॥

ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति (बृ.६।२।१५) इति श्रुतौ बहुत्वेन वासाधिकरणत्वेन च विशेषिता लोकाः । गन्तारश्च दूरदेशगत्या

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

विशेषिता इति न परं ब्रह्म तत् । किंतु कार्यमेवेत्यर्थः । लोकपदं तज्जन्यभोगपरम् । तेन तस्यैकत्वेपि विविधभोगज्ञापनाय बहुवचनं घटते ॥४।३।९॥

तत्र ब्रह्मशब्दप्रयोगे हेतुमाह ।

सामीप्यात्तु तद्व्यपदेशः ॥४।३।१०॥

तल्लोकस्थितानां नान्यलोकव्यवधानं परप्राप्तौ किंतु तत एवेति परब्रह्मसामीप्याद् ब्रह्मत्वेन व्यपदेशः कृतः । तुशब्दस्तु वस्तुतो ब्रह्मत्वं व्यवच्छिनत्ति ॥४।३।१०॥

ननु-आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोर्जुन (भ.गी.८।१६) इति वाक्यात्ततः पुनरावर्तते। अत्र तेषामिह न पुनरावृत्तिरस्तीति पठ्यत इति परमेवात्र ब्रह्मशब्देनोच्यत इति प्राप्त उत्तरं पठति ।

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥४।३।११॥

कल्पसमाप्तौ कार्यस्य ब्रह्मलोकस्य नाशे सति तदध्यक्षेण चतुर्मुखेन ब्रह्मणा सहातो ब्रह्मणः सकाशात्परमीश्वरं प्राप्नोत्यतोपुनरावृत्तिश्रुतिर्न विरुध्यते । अत्र प्रमाणमाह । अभिधानादिति । श्रुतौ तथाभिधानादित्यर्थः । सा तु-वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे (मुं.३।२।६) इति । परान्तकाल इत्यत्र परशब्देन ब्रह्मणः पूर्णमायुरुच्यते ॥४।३।११॥

उक्तेर्थे श्रुतिं प्रमाणत्वेनोक्त्वा स्मृतिमप्याह ।

स्मृतेश्च ॥४।३।१२॥

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् इति स्मृत्यापि स एवार्थः प्रतिपाद्यते ॥४।३।१२॥

अत्र सिद्धान्तमाह ।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

परं जैमिनिर्मुख्यत्वात् ॥४।३।१३॥

स एतान् ब्रह्म गमयति (छां.४।१५।५) इत्यय ब्रह्मपदेन परमेव ब्रह्मोच्यते। इति जैमिनिराचार्यो मन्यते। कुतः मुख्यत्वात्। बृहत्त्वादिधर्मविशिष्टं हि ब्रह्मपदेनोच्यते। तादृक् परमेव ब्रह्म भवतीति मुख्या वृत्तिर्ब्रह्मपदस्य परस्मिन्नेवान्यत्र गौणी। तथा च मुख्यगौणयोर्मध्ये मुख्यस्यैव बलिष्ठत्वात् तथा ॥४।३।१३॥

दर्शनाच्च ॥४।३।१४॥

स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् (कौ.१।३) इति कौषीतकिश्रुतेरग्न्यादिलोकप्राप्तिवदविशेषेणैव प्रजापतिलोकप्राप्त्यनन्तरं ब्रह्मलोकप्राप्तिं दर्शयति। न हि तत्र ब्रह्मलोकशब्देन कार्यः स उच्यत इति वक्तुं शक्यम्। पार्थक्येन प्रजापतिलोकस्योक्तत्वात्। अपरं चये चेमेरण्ये श्रद्धातप इत्युपासते तेर्चिषमभिसंभवन्ति(छां.५।१०।१) इति छान्दोग्यश्रुतिं विषयीकृत्य ह्यर्चिरादिना तत्प्रथितेः (ब्र.सू.४।३।१) इत्युपकम्याचार्येण कृतोन्यत्रार्चिःशब्दस्याभावात्। तत्र चान्ते ब्रह्म गमयतीत्युच्यते। तथा च छान्दोग्येनुक्तानामन्यत्रोक्तानां लोकानां मार्गैक्यसिध्यर्थं तत्रैव संनिवेशो वायुमब्दात्। तडितोधिवरुणः (ब्र.सू.४।३।३) वरुणाच्चाधीन्द्रप्रजापती (ब्र.सू.४।३।४) इत्यन्तेनोक्तः। एवं सत्यादावर्चिषं ततोहस्ततः सितपक्षं ततः संवत्सरं ततो वायुं ततो देवलोकं तत आदित्यं ततश्चन्द्रमसं ततो विद्युतं ततो वरुणं तत इन्द्रं ततः प्रजापति ततश्चामानवेन पुरुषेण ब्रह्मप्राप्तिरिति निर्णयः संपद्यते। एवं सति प्रजापतिलोकादन्यस्य कार्यब्रह्मलोकस्यासंभवात् तच्छङ्कापि भवितुं नार्हति यद्यपि तथापि व्यासोक्तमार्गैक्यममन्वानस्तथावददिति ज्ञायते। परंतु वेदार्थनिर्णयार्थमेव प्रवृत्तत्वाद् भगवदवतारत्वाच्च तदुक्तएव शास्त्रार्थ इति मन्तव्यम्। किंच स प्रजापतिलोकं स ब्रह्मलोकम् (कौ.१।३) इत्यत्र ब्रह्मपदस्य परवाचकत्वं तेनापि वाच्यं चेत् तद्दृष्टान्तेनान्यत्रापि तथैव वाच्यम्। बाधकाभावात्।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

ननु परस्य व्यापकत्वान्निर्विशेषत्वाच्च न गन्तव्यतोपपद्यते । जीवस्याप्यविद्योपाध्यवच्छिन्नतादशायां परब्रह्मणि गन्तृत्वासंभवात्तन्नाशे च वस्तुतोभिन्नत्वात् स्वरूपेणावस्थानमेव भवतीति न गन्तृत्वमप्युपपद्यते । तस्यैवाभावात् । जीवत्वदशायां तूपाध्यवच्छेदाद् गन्तृत्वं जीवस्यापरस्य ब्रह्मणश्चाविद्यकरूपनामवत्त्वेन गन्तव्यता चोपपद्यते । उपासनाफलत्वादस्य गमनस्योपास्यस्य च सगुणत्वेन तत्प्राप्तेरेवोचितत्वाच्च निर्गुणब्रह्मविद्यावतो गन्तृत्वासंभव इत्युक्तमतो बादरिमतमेव साधीयः । न च ब्रह्मपदस्य मुख्यार्थत्वमुक्तरीत्यात्र संभवत्यतोत्रामुख्यार्थत्वमेवानुसर्तव्यमिति चेत् । स्यादेतदेवं यद्यौपाधिकमुपास्यरूपं जीवत्वं वा स्याद् नत्वेवम् । प्रकृतैतावत्त्वं हि प्रतिषेधति (ब्र.सू.३।२।२२) इत्यादिभिः तद्गुणसारत्वाच्च तद्व्यपदेशः (ब्र.सू.२।३।२९) इत्याद्यधिकरणैः श्रुत्यर्थनिर्णयेन ब्रह्मणि विशेषाणामौपाधिकत्वस्य जीवपुरुषोत्तममाभेदस्य च पुरस्तादेव निरस्तत्वात् । न च व्यापकत्वं गन्तव्यत्वे बाधकम् । प्रारब्धभोगं विना तत्प्राप्त्यसंभवाद् यदा यत्र तद्भोगसमाप्तिस्तदा तत्र तत्प्राप्तेर्निष्प्रत्यूहत्वात् ।

किंच । उपास्यरूपाणां सर्वेषां निर्गुणत्वमेवोपासकस्य । परं सगुणत्वेन तत्तारतम्यात् फलतारतम्यम्। यस्तु भगवदनुग्रहेण प्राकृतगुणरहितोभूत् स निर्गुणब्रह्मविद्यावानित्युच्यते । तादृशस्यैव मुक्तिप्रकारद्वयमुक्तं सद्यामुक्तिममुक्तिभेदेन । न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति (बृ.४।४।२२) इत्यादिश्रुतिस्तु प्रारब्धरहितविषया । निर्गुणब्रह्मविद्यावतोपि प्रारब्धभोगस्तु त्वयापि वाच्योन्यथा प्रवचनासंभवेन ज्ञानमार्ग एवोच्छिद्येत । ते ब्रह्मलोके तु परान्तकाले (मुं.३।२।६) इति श्रुतिरपि परान्तकाल एव येषां प्रारब्धभोगसमाप्तिस्तद्विषयिणीति मन्तव्यम् । अन्यथा वेदान्तविज्ञानेत्याद्युक्तधर्मविशिष्टानां मुक्तौ विलम्बो नोपपद्यत इति दिक् ॥४।३।१४॥

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

न च कार्ये प्रतिपत्त्यभिसंधिः ॥४।३।१५॥

अपि च - ब्रह्मविदाप्नोति परम् (तै २।१) इति संक्षेपेणोक्त्वा तदेषाभ्युक्ता इति तद्विवरिकामृचं प्रस्तुत्य सोक्ता । सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम् परमे व्योमन् । सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता (तै.२।१) इति । अत्रोपक्रमानुरोधेन परेणैव ब्रह्मणा सह सर्वकामभोगलक्षणा प्रतिपत्तिरुच्यत इति कार्यरुपे वस्तुमात्रे प्रतिपत्तिर्न क्वापि श्रुतेरभिप्रेतातोत्रापि परमेव ब्रह्मपदेनोच्यते । ऋगर्थस्त्वानन्दमाधिकरणे प्रपञ्जित इति नात्रोक्तः ॥४।३।१५॥३॥

४ अप्रतीकाधिकरणम् ।

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च ॥४।३।१६॥

क्रममुक्त्यधिकारिणः प्रारब्धं भुक्त्वामानवेन पुरुषेण प्रापिताः परमेव ब्रह्म प्राप्नुवन्तीति सिद्धम्। तत्रेदं संदिह्यते । अर्चिरादिलोकप्राप्तिर्ह्युपासनाविशेषफलम् । एवं सत्यमानवः पुरुषस्तान् सर्वान् ब्रह्म प्रापयत्युत कांश्चिदेवेति । किमत्र युक्तम् । सर्वानिवेति । यतोर्चिरादिमार्गगतानामन्ते ब्रह्मप्रापणार्थमेव स नियुक्तस्ततोन्यथाकरणे हेत्वभावात्तथैव स कर्तेति प्राप्ते ।

उच्यते । श्रुतौ ब्रह्मत्वेनैव सर्वत्रोपासनाया उक्तत्वादुपास्येषु भगवद्विभूतिरूपत्वेन शुद्धब्रह्मरूपेष्वप्यतथात्वं ज्ञात्वा श्रुतिर्ब्रह्मत्वोपासनायाः फलसाधनत्वं वदति । न तूपास्ये ब्रह्मतामपीति मन्वाना य उपासते ते प्रतीकालम्बना इत्युच्यन्ते । तथा च सत्यपि वेदविहितत्वेनोपासनायाः कृतत्वेन सफलत्वात् तत्फलकत्वेनोपासकानामर्चिरादिलोकप्राप्तवपि तानमानवः पुरुषो ब्रह्म न प्रापयति किंतु शुद्धब्रह्मत्वं ज्ञात्वा य उपासते तानेव ब्रह्म प्रापयतीति बादरायण आचार्यो मन्यते । तत्र हेतुमाह । उभयथा दोषादिति । वस्तुतो यद्ब्रह्मरूपं तत्राब्रह्मत्वनिश्चय उपासनार्थं च ब्रह्मत्वेन भावनमेवमुभयथा करणे दोषः संपद्यत इति तस्य न ब्रह्मप्राप्तावधिकारोस्तीति युक्तं तदनयनमित्यर्थः । तथा च श्रुतिः । असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् (तै.२।६) इति । योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

चौरेणात्मापहारिणा इति । एवं ज्ञानमार्गीयव्यवस्थामुक्त्वा भक्तिमार्गीयस्यापि तामाह । तत्कर्तुश्चेति । सर्वं मद्भक्तियोगेन (भा.११।२१।३३) इति वाक्यान्न तस्योपासनापेक्षेति न प्रतीकादिसंभावना। तत्र कथंचिद्यदि वाञ्छतीति वाक्यादिच्छामात्रेण तद्भोगकरणानन्तरं प्राचीनभगवद्भजनलक्षणकतुश्च नीयत इत्यर्थः । वस्तुतस्तु भक्तस्यामानवपुमपेक्षाभावात् स्वयमेव ब्रह्मलोकान् प्राप्नोतीति ज्ञापनाय प्रथमान्त उक्तः । ननु ब्रह्मणोधिकं न किंचिदस्ति । न तत्समश्चाभ्यधिकश्च दृश्यते(श्वे.६।८) इति श्रुतेः । एवं सति च्छान्दोग्ये सनत्कुमारनारदसंवादे - स यो नाम ब्रह्मेत्युपास्ते (छां.७।१।१) इत्यादिना नामवाङ्मनः संकल्पचित्तध्यानविज्ञानादीनां ब्रह्मत्वेनोपासनमुत्तरोत्तरं पूर्वस्मात् पूर्वस्माद् भूयस्त्वं चोच्यतेतो न ब्रह्मत्वं सर्वेषामुपास्यानां वक्तुं शक्यमिति चेत् मैवम् । विभूतिरूपाणां नियतफलदातृत्वाद् येन रुपेणाल्पफलदानं तत्राधिकगुणप्राकट्ये प्रयोजनाभावात् तावन्मात्रगुणप्रकटनं येन रूपेण ततोधिकफलदानं तत्र ततोधिकगुणप्रकटनमिति पूर्वस्मादाधिक्यमुच्यतो एवमेव सर्वत्र । नियतफलदानं तु स्वतन्त्रेच्छत्वाल्लीलारूपमिति नानुपपन्नं किंचित् । प्रतिमादिष्वावाहनेन संनिहिते विभूतिरूपे तद्भावनं पूजामार्गे । भक्तिमार्गे तु भक्त्या तत्र प्रकटे तथा । गुरौ तु शाब्दे परे च निष्णातं ब्रह्मणीति विशेषणवत्त्वेन भगवदावेशात् तत्र तद्भावनमिति सर्वमवदातम् । अपि च बादरिजैमिनिमतोक्त्यनन्तरं स्वमतोक्त्या तत्समानविषयत्वमत्रापीत्यवगम्यते । तत्र च कार्यब्रह्मलोकप्राप्तिपरब्रह्मप्राप्तिविषयत्वमुक्तं पूर्वोत्तरपक्षभेदेन । बादरिमते सविशेषस्यैवोपास्यत्वाद्विशेषाणां चाविद्यकत्वादुपासनानां सर्वासां प्रतीकतद्रूपत्वमेव सिध्यति । एवं सत्यप्रतीकालम्बनान्नयतीति वदता व्यासेन बादरिमतानुसारिण उपासकस्य न कस्यापि ब्रह्मप्राप्तिरिति ज्ञाप्यते । वस्तुतस्तूपासनायामुपास्यस्वरूपज्ञानस्याप्यङ्गत्वात्तन्मतीयानामुक्तरीया तदभावेन निरङ्गत्वादर्चिरादिप्राप्तिरपि न संभवति किं पुनर्ब्रह्मण इति निगूढाशयो व्यासस्य । एवं सति परप्राप्तावेवोपोद्धलकमुक्तं भवतीति सैव व्यासाभिमतेति सिद्धम् । ये तु प्रतीकेष्वब्रह्मकर्तुत्वं वदन्तः पञ्चाग्निविद्यायास्तथात्वेपि वचनबलात् तद्वतो ब्रह्मप्राप्तिरिति

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

वदन्ति । तत्रेदमुच्यते । वचनं तु वस्तुसतः पदार्थस्य बोधकं न तु कारकमतस्तच्चेद् बोधयति तदाप्रतीकालम्बनान्नयतीति व्यासोक्त्यविरोधाय तत्राप्यप्रतीकत्वमूरीकार्यम् । अन्यथा पञ्चाग्निविद्यानिरूपिकां श्रुतिं पश्यन्नेवं स न वदेत् । न चौत्सर्गिकं पक्षमाश्रित्य तथोक्तमिति वाच्यम् । तस्य बाधकापनोद्यत्वाद्वचनस्य चोक्तन्यायेनाबाधकत्वात् । यत्र वचनस्य बाधकत्वमुच्यते तत्र बाधबोधकत्वमेव । न तु तथात्वमित्युपेक्षणीयास्ते। ननु मनःप्रभृतीनां शुद्धब्रह्मत्वेमनो ब्रह्मोपास्ते इति वदेन्न तु प्रकारवाचीतिशब्दशिरस्कं ब्रह्मपदमत उपासनाप्रकारावच्छेदकत्वमेव ब्रह्मपदस्य न तु स्वरूपनिरूपकत्वमिति चेद् हन्तेदं शब्दार्थानवगमविजृम्भितमेव । यतो मन उपास्सवेत्युक्त्वा तदुपासनाफलं यावन्मनोगतं तत्रास्य कामचारो भवतीति वदिष्यंस्तदुपासनाया एतत्फलसाधकत्वे प्रयोजकरूपाकाङ्क्षायामाह । मनो ब्रह्मेति । इति शब्दोत्र हेतुत्ववाची । तथा च यतो मनो ब्रह्मातो हेतोस्तदुपासनं तादृक्फलसाधकमित्यर्थः । अत एव मनो हि ब्रह्म मन उपास्स्वेति पूर्वमुक्तम् । सर्वत्रैवमेव ज्ञेयम् ॥४।३।१६॥४॥

## ५ विशेषाधिकरणम् ।

### विशेषं च दर्शयति ॥४।३।१७॥

सर्वाण्युपास्यानि रूपाणि ब्रह्मरूपाण्येवेति तदुपासकानां परप्राप्तिरेवेति सिद्धम् । तत्रेदं चिन्त्यते । ज्ञानमार्गीयाणां भक्तिमार्गीयाणां चाविशेषेणैव परप्राप्तिरुत कश्चिद्विशेषोस्तीति । तत्रोभयोरपि ब्रह्मोपासकत्वेना। विशेषेणैव फलं भवतीति प्राप्ते प्रत्याह । विशेषं च श्रुतिदर्शयति । तैत्तिरीयके पठ्यते । ब्रह्मविदाप्नोति परम् (तै.२।१) इति गूढाभिसंधिना सामान्यत एतावदुक्त्वा गूढं तमुद्धाटयन्त्यतिगोप्यत्वमस्मिन्नर्थेनुमवैकवेद्यत्वं च ज्ञापयन्त्याह-तदेषाभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निंहितं गुहायां परमे व्योमन् । सोश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता (तै.२।१) इति । तत्पूर्वोक्तं प्रतिपाद्यत्वेनाभिमुखीकृत्यैर्गुक्ता तदनुभवकर्तृभिरिति शेषः । ब्रह्मविदक्षरब्रह्मविदाप्नोति सांन्निध्यादक्षरमेवाप्नोति । एतावानर्थो यो वेदेत्यन्त्यर्चोक्तः । अथ परमोप्नोतीत्यस्यार्थ उच्यते निहितमित्यादिना। अत एव मध्ये क्रियापदमुभयसंबन्धित्वज्ञापकमुक्तम् । तत्प्राप्तिश्च मर्यादापुष्टिभेदेन द्वेधा

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

। तत्रादौ मर्यादायामुच्यते । इहायमाशयो ज्ञेय: । नायमात्मा प्रवचनेन (मुं ३।२।३) इति श्रुत्या भगवद्धरणातिरिक्तसाधननिरास: क्रियते पुरुषोत्तमप्राप्तौ । एवं सत्यक्षरब्रह्मज्ञानस्य तत्साधनत्व उच्यमाने तद्विरोध: स्यात् । तेनैवमेतदर्थो निरूप्यते । ज्ञानमार्गीयाणामक्षरज्ञानेनाक्षरप्राप्तिस्तेषां तदैकपर्यवसायित्वात् । भक्तानामेव पुरुषोत्तमपर्यवसायित्वात् । तदुक्तं भगवद्गीतासु - एवं सततयुक्ता ये (भ.गी.१२।१) इति प्रश्ने-मय्यावेश्य मनो ये माम् (भ.गी.१२।२) ये त्वक्षरमनिर्देश्यम् । (भ.गी.१२।३) श्रीभागवते च - भक्त्याहमेकया ग्राह्य: (भा.११।१४।२१) तस्मान्द्मक्तियुक्तस्येत्युपक्रम्य-न ज्ञानं न च वैराग्यं प्राय: श्रेयो भवेदिह (भा.११।२०।३१) इत्यादिना । तथा च ब्रह्मविदं चेद्भगवान् वृणुते तदा भक्तिरुदेति । तत्प्रचुरभावे सति स्वयं तद् हृदि प्रकटीभविष्णु: स्वस्थानभूतं व्यापिवैकुण्ठं तद्गुहायां हृदयाकाशे प्रकटीकरोति तत् परमव्योमशब्देनोच्यते । अलौकिकप्रयोगेण तस्यालौकिकत्वं ज्ञाप्यते । यथा स्वस्थापितं वस्त्ववश्यं दर्शनयोग्यं भवति तथात्र भगवानपीति ज्ञापनाय निहितमित्युक्तम् । तथा च परमाप्नोतीति पदविवृतिरूपत्वादस्य गुहायां परमे व्योम्नि निहितं यो वेद स नास्य प्राणा उत्क्रामन्तीहैव समवलीयन्ते ब्रह्मैव सन् ब्रह्मैव सन् ब्रह्माप्येति (बृ.४।४।२२) इति श्रुत्युक्तरीत्या परमाप्नोतीत्यर्थ: संपद्यते । अथ शुद्धपुष्टिमार्गेङ्गीकृतस्य व्यवस्थामाह । सोश्नुते (तै.२।१) इत्यादिना । अत्रायमभिसंधि: । यथा स्वयं प्रकटीभूय लोके लीलां करोति तथात्यनुग्रहवशात् स्वान्त: स्थितमपि भक्तं प्रकटीकृत्य तत्स्नेहातिशयेन तद्वश: सन् स्वलीलारसानुभवं कारयतीति स भक्तो ब्रह्मणा परब्रह्मणा पुरुषोत्तमेन सह सर्वान् कामानश्नुत इति । चकारादुक्ता श्रुति: स्मृतयश्च संगृह्यन्ते । एवं सति ज्ञानमार्गीयाणामक्षरप्राप्तिरेव । भक्तानामेव पुरुषोत्तमप्राप्तिरिति सिद्धम् ॥४।३।१७॥५॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये

चतुर्थाध्यायस्य तृतीय: पाद: ॥४।३॥

* * *

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

# चतुर्थाध्याय तृतीयपाद

## अर्चिराद्यधिकरण

अब प्रश्न यह उपस्थित होता है कि जिस प्रकार ज्ञानमार्गीय जीव अर्चिरादिमार्ग से होकर क्रम क्रम से मोक्ष प्राप्त करते हैं उसी तरह मर्यादामार्गीय भक्त अर्चिरादिमार्ग से होकर क्रम क्रम से मोक्ष प्राप्त करते है या शीघ्र ही ? इसका सरल उत्तर तो यह है कि ज्ञानमार्गी जीवों में से किसी **को क्रम क्रम** से मोक्ष प्राप्त होता है और किसी को शीघ्र ही, उसी प्रकार मर्यादामार्गी भक्तों को भी मोक्ष मिलता और किसी को शीघ्र ही तब सूत्रकार कहते हैं कि-

**अर्चिरादिना तत्प्रथितेः।४।३।१।**

सूत्रार्थ- अर्चिरादिमार्ग तो ज्ञानमार्गीय जीवों के जाने का होता है,'मर्यादामार्गीय भक्तों के लिये नहीं, कारण कि अर्चिरादिमार्ग ज्ञानमार्गीय जीवों के लिये ही श्रुति में कहा है । मर्यादामार्गीय भक्त के लिये नहीं, मर्यादामार्गीय भक्त को तो शीघ्र ही मुक्ति मिलती है ।

सूत्रभाष्य- 'अर्चिरादिमार्ग का जिस प्रकार निरूपण है वहां ज्ञानमार्गीय को ही लक्ष्य में रखकर निरूपण किया गया है, इसलिये इसको ही इस मार्ग से जाने का होता है, अब यह मार्ग एक ही है इस बात का निरूपण नीचे दिया गया है । (छान्दोग्य उपनिषद् में जो) पंचाग्निविद्या का निरूपण है वहां कहा है कि '**तद् ये इत्थं विदुर्ये च इमे अरण्ये श्रद्धा तप इत्युपासते ते अर्चिषमभि संभवन्ति, अर्चिषो अहः अह्नः आपूर्यमाणपक्षम्**' जिन लोकों को (इस पंचाग्नि विद्या का) इस प्रकार का ज्ञान है और जो लोक जंगल में रहकर ईश्वर श्रद्धापूर्ण जीवन का अर्थात् प्रभु रखे वैसे संतोषपूर्वक रहना, सुख में इठलाना नहीं, दुःख में घबराना नहीं आदि-आदि सहन करते है । यह तप है । ऐसा जानकर धर्म परायण जीवन जीते हैं वे यह लोक छोड़कर पहले अर्चिलोक में जाते हैं, वहां से दिवस लोक में, वहां से शुक्ल पक्ष लोक में आदि, इस प्रसंग में भक्तों को नहीं, परन्तु ज्ञानियों को उद्देश्य कर इस तरह की गति का निरूपण है । श्रीमदभगवत् गीता में भी '**अग्निर्ज्योतिरहः शुक्लः**' (भ.गी.८।२४।) इस लोक में '**ब्रह्मविदोजनाः**' अर्थात् ब्रह्मज्ञानी लोकों की बात है अर्थात् अर्चिरादिमार्ग ज्ञानमार्गीयों के लिये है, 'भक्तों के लिये नहीं, ये तो सीधे भगवल्लोक में जाते हैं । यह कही गयी बात तो संगति प्रदर्शन को पूर्ण करने वाली है, अर्चिरादिमार्ग के निरुपण का प्रसंग पैदा ही कैसे हुआ यह बताना शेष है, इस पाद का मुख्य विषय तो अर्चिरादि मार्ग का विस्तृत निरूपण है, इसलिये नीचे की चर्चा का निरूपण है ।

अब विचार इस प्रकार करते हैं- छान्दोग्य उपनिषद् में '**अथ या एता हृदयस्य नाड्यः, ता पिंगलस्य अणिम्नस्तिष्ठन्ति शुक्ल स्यनीलस्य पीतस्य लोहितस्येति, असौ वा आदित्यः पिंगलः**' अर्थात् जो यह हृदय की नाडियाँ है वे एक नारांगी रंग का सूक्ष्म रस उसको लेकर अपने-अपने कार्य

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

करती है । यह रस सफेद, श्याम, पीला, उसी तरह लाल भी है सामने दूर दिखता सूर्य भी नारंगी है । इस प्रकार आरम्भ कर नाड़ियां सूक्ष्म दृष्टि से नारंगी रंग की सूर्य की किरणे हैं । इस तरह कहकर आगे ऊपर कहा गया है कि **'अथ यत्रै तद् अस्माच्छरीरादुत्क्रामति अथ एतैरेवरश्मिभिः ऊर्ध्व आक्रमते'** (छा.६।८।५) अर्थात् नाड़ी जब जीव इस शरीर में से बाहर निकलता है तब यह नाडी रूपी किरणों द्वारा ऊपर जाता है । इस प्रकार शरीर में हो वहां तक नाडी से और शरीर छोड़ने के पश्चात् सूर्य की किरणों द्वारा जीव परलोक-प्रयाण करता है । यह परलोक प्रयाण का मार्ग और **'ते अर्चिषममि संभवन्ति, अर्चिषः अहः'** अर्थात् यह अर्चिलोक में जाता है। इस प्रकार परलोक-प्रयाण का दूसरा मार्ग **'स एतं देवयानं पन्थान मापाद्य अग्निलोकमागच्छति'** अर्थात् यह जीव देवयान मार्ग द्वारा अग्निलोक में आता है । इस प्रकार का तृतीय मार्ग **'स यदा वै पुरुषः अस्माल्लोकात् प्रैतिस वायुमागच्छति'** अर्थात् यह जीव जब इस लोक को छोड़कर परलोक की ओर प्रयाण करता है तब यह वायु लोक में पहले आता है । इस प्रकार का चतुर्थ मार्ग और **'सूर्यद्वारेण ते विरजाः प्रयान्ति'** अर्थात् शुद्ध हुए ये जीव सूर्य द्वारा परलोक प्रयाण करता है इस प्रकार यह पंचम मार्ग है, अब इस तरह अलग-अलग अनेक परलोक प्रमाण मार्ग होने से फिर एक अर्चिमार्ग को मुख्य किसलिये रखा ? अथवा यह परलोक प्रयाण के सभी मार्ग अर्चिमार्ग ही कहलाते है इस प्रकार मान लेना उचित है । इसलिये तो (छान्दोग्य उपनिषद् में) **'अथ एतयोः पथोः न कतरेणचन'** अर्थात् जिनको परलोक प्रयाणार्थ इन दो में से एक हाथ नहीं आता उनके लिये **'जायस्वम्रियस्व इति तृतीयं स्थानम्'** अर्थात् बारम्बार जन्म ले और मरे, इस प्रकार महाकष्टकारी तृतीय ही मार्ग बताया गया है । अब जो अर्चिमार्ग एक ही हो तो फिर इस मार्ग को तृतीय किसलिये कहें ? अर्थात् श्रुति में वर्णित अनेक मार्गों में से यह तीसरा मार्ग है । 'इसलिये ये अलग अलग प्रकरणों में अलग अलग उपासनाओं का निरूपण है और उन उपासना के फलरूप एक दूसरे से अलग ये सभी स्वतंत्र परलोक प्रयाण मार्ग ब्रह्म प्राप्ति के लिये हैं इस प्रकार मानना उचित हैं ।

(इस प्रकार पूर्वपक्षी ने जब कहा) तब सिद्धान्ती कहता है (श्रुति में) इन सभी मार्गों के लिये अर्चिमार्ग जैसा कोई एक विशेष नाम नहीं है । जिससे इन सभी मार्गों को स्वतन्त्र मार्ग मान सकें, इसलिये उचित मानना तो यह है कि अर्चिमार्ग नाम प्रसिद्ध परलोक प्रयाण का यह एक ही मार्ग है और अग्निवायु आदि तो ये मार्ग ऊपर के अलग अलग स्थान है । एक मार्ग पर रहने वाले स्थानों में नाम पृथक् पृथक्, और इनको लेकर मार्गों को अलग अलग नहीं कर सकते है, कारण कि ऐसा कहे और ऐसा माने तो अनावश्यक अधिक मानना पड़ेगा ।

अब पूर्वपक्षी इस प्रकार कहे कि **'अथएतैरेव रश्मिभिः'** अर्थात् (जीव) इन किरणों द्वारा ही ऊपर जाते हैं । इस प्रकार श्रुति वाक्य में किरणों द्वारा ही और दूसरे किसी प्रकार नहीं इस प्रकार जो भारपूर्वक कहा है वह निरर्थक हो जाता है । कारण कि इस प्रकार कहने से अर्चिमार्ग को अवकाश

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

नहीं रहता और यह किरण मार्ग की बात है वहां अर्चिमार्ग का नाम निर्देश भी नहीं । 'तो इसका उत्तर यह है कि' इस स्थान पर जीव देह को किस प्रकार छोड़ता है इसकी बात है । किस मार्ग से जाकर ब्रह्म प्राप्त करता है इसकी बात नहीं । कारण कि वहां आरम्भ में **'अथ यत्रैतद् अस्माच्चशरीराद् उत्क्रामति, अथ एतैरेव रश्मिभिःरुर्ध्वं आक्रमते'** अर्थात् अब जब यह जीव इस शरीर को छोड़ता है तब इन किरणों द्वारा ही ऊपर जाता है । इस प्रकार देह छोड़ने के प्रकार की ही बात है । और इसके पहले **'अथ या एता हृदयस्य नाड्यः'** अर्थात् अब, जो इस हृदय की नाड़ियां है इस प्रकार आरम्भ कर इसमें रहने वाला नारंगी रंग और सूर्य एक ही है, ये अलग नहीं ऐसा कहकर **'तद् यथा महापथ आततः उभौ ग्रामौ गच्छति, इमं च अमु चं, एवमेव एता आदित्यस्यरश्मय उभौ लोकौ गच्छन्ति, इमं च, अमुं च, अमुष्माद् आदित्यात् प्रातयन्ते ता आसु नाडीषु सृप्ताः आभ्यो नाडीम्यः प्रतायन्ते ते अमुष्मिन् आदित्ये सृप्ताः'** अर्थात् जिस तरह एक राज मार्ग फैला हो वे दोनों गांवों को जोड़ता है, यह एक गांव और सामने दूसरा गांव उस तरह इस सूर्य की किरणे दोनों लोको को जोड़ती है इस लोक और परलोक को, जो पहले सूर्य में से किरणें निकलती है वह इन नाडियों में आकर मिली है और जो किरणें इन नाडियों में से निकली है वे पहले सूर्य में जाकर मिली है । इस प्रकार के वाक्य तक में सूर्य की किरणे नाडियों में फैली हुई है । इस प्रकार कहकर आगे ऊपर कहा है कि **'अथ यत्रैतद् अस्मात्'** अर्थात् अब जब यह जीवात्मा इस शरीर में से बाहर निकलता है' आदि और इस प्रकरण के उपसंहार में **'शतं चैका हृदयस्थ नाड्यः, तासां मूर्धानमभिनिःसृतैका, तयोर्ध्वमायन् अमृतत्वमेति, विष्वङ् अन्याउत्क्रमणे भवन्ति'** अर्थात् हृदय में एक सो नाड़ियां है उनमें से एक मस्तक की ओर निकली हुई है उस द्वारा जो जीव बाहर निकले उसको मोक्ष प्राप्त होता है, बाकी की नाडिया तो 'मोक्षेतर गति अर्थात् स्वस्व कर्मानुसार पुनर्जन्म लेने वालों के लिये देह से बाहर निकलने के लिये है, इस तरह (कहा हैं) इस रीति से आरम्भ में और अन्तिम में देह में से जीव बाहर किस प्रकार निकले इसका निरूपण है, किस मार्ग से होकर परब्रह्म को प्राप्त करता है इसका निरूपण नहीं है इसलिये **'अथ एतैरेव रश्मिभिः'** अर्थात् इन किरणों के मार्ग से ही पर ब्रह्म प्राप्त होता है, दूसरे मार्ग से नहीं आदि, जो कठिनाई ऊपर दिखायी है वह और इसका स्पष्टीकरण निरर्थक है ।

अब सिद्धान्ती का मत यह है कि ब्रह्म प्राप्ति कराने वाला, एक ही मार्ग है (और यह अर्चिमार्ग) और भिन्न-भिन्न श्रुति वाक्यों में जो पृथक्-पृथक् नामों का निरूपण है वे तो इस मार्ग पर से अलग अलग स्थल है । 'तो, अब, पूर्व पक्षी इस बात का विरोध करते हुए इस प्रकार कहते हैं, श्रुति किसी एक स्थान पर भी इन सभी स्थलो का निरूपण नहीं कर कहीं किसी स्थलों का और कही दूसरे स्थलों का इस तरह निरूपण क्यों करती है ? (इसके उत्तर में सिद्धान्ती कहते है कि) श्रुति कोई एक स्थान का निरूपण नहीं करती कहीं किसी स्थल का और कहीं दूसरे स्थल का निरूपण कैसे करती है ? 'इसके उत्तर में सिद्धान्ती कहता है कि' इन सभी स्थलों को एक साथ ध्यान में लेने से यह एक मार्ग पर के सभी

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

स्थलों का ज्ञान आ जायेगा इसके लिये (तब पूर्वपक्षी कहता है कि) भाई जो तू इस प्रकार कहता है तो जिसको 'अपनी एक ही शाखा के वेद का अभ्यास किया है और, दूसरी शाखा के वेद का जिसको ज्ञान नहीं, उसका क्या होगा ? इसको कब सभी स्थलों का ज्ञान हो सकेगा ? इसलिये इसकी पूर्ति में तो यह श्रुति अधूरी ही है ? 'इसके उत्तर में सिद्धांती ऐसा कहते हैं, जिसने सभी शाखाओं का अभ्यास किया है उसको लक्ष्य में रखकर 'श्रुति किसी स्थल, मार्ग स्थल का और दूसरे स्थल पर दूसरे मार्ग का निरूपण करती है । 'यह इस प्रकार समझकर इसका सर्व शाखाध्यायी सभी स्थल मिलाकर, इनको यथा स्थान रखे तो समग्र मार्ग का ज्ञान मिल जायेगा । 'तब पूर्वपक्षी कहता है कि, यह ठीक नहीं, कारण कि यह अशक्य है । (कारण कि) वेदाध्ययन के विषय में जो वेदाज्ञा है वह अपनी अपनी शाखा के वेदाध्ययन के लिये है नहीं कि सभी शाखाओं के वेद के अध्यन के लिये' इसलिये श्रुति ने जो कोई अपनी अपनी शाखाओं के वेद में कहा है वह अपनी अपनी शाखा हेतु ही है । उपरांत 'उपसंहार अर्थात् भिन्न-भिन्न संबंधों का एकत्रीकरण इसके द्वारा ही जो काम बन जाता हो तो, कहीं कहीं ये मार्ग स्थल मिलते आते है ये किसलिये ? 'इस प्रकार की पुनरुक्ति वस्तुतः निरर्थक है, कारण कि इस पुनरुक्ति बिना भी' उपसंहार से तो सभी मार्ग स्थल सर्वत्र मिल जाते हैं । इसलिये पृथक् पृथक् दिशाओं से एक गांव की ओर आने वाले मार्ग जिस तरह अलग-अलग होते हैं उसी तरह, 'अलग अलग आध्यात्मिक भूमिकाओं के ऊपर से एक ब्रह्म की और आने वालों के लिये यह पृथक् पृथक् मार्ग है इस प्रकार मानना ठीक है । ये सभी मार्ग, एक दूसरे से वस्तुतः अलग है और एक ब्रह्म की प्राप्ति कराने वाले हैं।

अब इस प्रसंग में कोई इस तरह आशंका करे कि जो इस प्रकार ब्रह्म प्राप्ति कराने वाले मार्ग अनेक हो तो '**अथ एतयोः पथोः**' अर्थात् इन मार्गों में से इस प्रकार के दो मार्ग किसलिये कहते ? और '**जायस्व म्रियस्व**' अर्थात् ऐसे जीवों के लिये तो बारम्बार जन्म लेने का और मरने का जो निर्णय हुआ है, इस प्रकार के मार्ग को तीसरा मार्ग क्यों कहा ? 'तो पूर्व पक्षी का इस तरह की आशंका करने पर इस प्रकार कहना है कि' यह आशंका ठीक नहीं, कारण कि अर्चिरादिमार्ग का निरूपण करने के पश्चात् अन्त में कहा है कि '**एष देवयानः पन्थाः**' अर्थात् मार्ग का नामदेवयान है उपरान्त '**य एतं देवयानं पन्थानमापद्य अग्निलोक मागच्छति**' अर्थात् जो जीव इस देवयान मार्ग पर आने के पश्चात् अग्निलोक में आता है। इस प्रकार एक दूसरे श्रुति वाक्य में भी कहा है, अर्थात् परब्रह्म की प्राप्ति कराने वाले ये सभी मार्ग देवयान ही कहलाते हैं । उपरान्त (श्रीभगवद् गीता में) भगवान् ने कहा है कि 'दैवी संपद विमोक्षाय' अर्थात् दैवी गुण (मनुष्य को) मोक्ष के मार्ग ले जाते है-इस वाक्यानुसार इस प्रकार के दैवी गुणों के साथ जिन जीवों ने जन्म लिया हो वे देव कहलाते हैं और ये जिस रास्ते जाते हैं वे सभी मार्ग देवयान कहलाते हैं। दूसरा 'अर्थात् पितृयान ये तो परोपकारी जीवों के लिये है, अर्थात् मोक्ष प्राप्ति करने के लिये है । विशेष गुण चाहिये उनकी आवश्यकता, (इनके लिये) नहीं, इस रीति से 'पितृयान यह दूसरा मार्ग और (दो के अतिरिक्त वह) तीसरा मार्ग, इस प्रकार यह सभी का मेल हो जाता है । 'इस

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

रीति से भिन्न भिन्न अनेक मार्गों का तीन मार्गों में समावेश हो जाता है, अर्थात् भिन्न भिन्न अनेक मार्ग मानना यहीं उचित है । इस प्रकार पूर्वपक्षी कहे तब कोई आशंका करे इसके लिये कहते हैं 'ऊपर जैसा कहा उस भांति 'यह सब प्रलाप एक ओर रखकर' संक्षिप्त अर्थात् एक ही मार्ग क्यों नहीं मानना ? 'तब पूर्वपक्षी कहता है कि, नहीं इस प्रकार नहीं मान सकते, कारण कि वेद ये स्वतः प्रमाण है (एक शाखा का अध्ययन करने वाला मनुष्य) जब ये ब्रह्मप्रापक मार्ग का निरूपण करने वाले जो वेद भाग को ये सुनते है तब उन उन भाग का जो अर्थ वह समझने में प्रवृत्त होता है और इस समय अन्य मार्गों का निरुपण दूसरे वेदभाग इसके सामने नहीं होते हैं । इस लाघव का विचार करे, उपरान्त एक बार इस तरह के वेद भाग सामने हो तो भी क्या ? सभी को मिलाकर एक मार्ग बनाने में रहने वाली कठिनाइयों को लेकर इस प्रकार शक्य नहीं, उपरान्त, जो ब्रह्म ज्ञानी को धीरे धीरे मोक्ष मिलने का है (वह जिस मार्ग से जाकर मोक्ष मिलेगा) उस मार्ग का (यह अर्चिमार्ग का निरूपक) भाग में निरूपण किया है, और इस प्रकार के जीव तो मार्ग में आते लोकों में रुककर और इनके आस्वादन का अनुभव करे इस तरह (मानने) की आवश्यकता भी है । इसलिये जिस उपासना का प्रकार अलग है तो इसका फल भी अलग है अर्थात् (फल की तरह लेकर जाने वाला) मार्ग भी अलग है अर्थात् सबको मिलाकर एक मार्ग माने तो सभी उपासना के प्रकार का फल भी एक मानना पड़ेगा और ये भी ठीक नहीं, इससे भी उपासना के कर्म जिसका आधार करने वाले ऊपर है उसमें तो उपसंहार अर्थात् अलग अलग निरूपित अंग इकट्ठे करने का इसको अवकाश है, परन्तु फल प्रापक का मार्ग किसी कृति का विषय नहीं, या इसके स्थानों को मिला सके।(और) यह बात '**उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च**' अर्थात् उपसंहार तो वहां होता है कि जहां मूल वस्तु एक हो, परन्तु जहां ऊपर से समान मालुम पड़े, फिर भी शाखाभेद अथवा फल भेद के कारण मूल वस्तु भिन्न हो वहां यह उपसंहार करने का नहीं हो, यह ब्रह्म सूत्र में कहा है । 'प्रस्तुत प्रसंग में शाखा भेद के कारण, उपासना फल भेद के कारण यह मार्ग पृथक् है इसलिये यहां उपसंहार संभव नहीं इस प्रकार पूर्वपक्षी का कहना है' अर्थात् (अर्चिस) शब्द तत्सदृश सभी मार्गों का बोधक है, और 'आदि' अर्थ का वाचक जो 'आदि' शब्द है उससे यह (ब्रह्मप्रापक) मार्ग समझ लेना, अर्थात् अब अयोग्य कुछ भी नहीं रहा है ।

'जब पूर्वपक्षी ने इस प्रकार कहा तब सिद्धान्ती कहता है कि (भाई, तू इस प्रकार) जो कहता हो' तो हमारा कहना (इस प्रकार) है (सूत्रकार का आशय) तू समझता है उस प्रकार होता तो '**अर्चिरादित्य**' इस प्रकार बहुवचन का प्रयोग इसने किया होता, परन्तु इसने तो 'अर्चिरादिना' इस प्रकार एक वचन का प्रयोग किया है जो मार्ग एक नहीं हो तो, सूत्रकार नहीं करे, इसलिये भी ब्रह्मप्रापक मार्ग भी एक है इस प्रकार ही स्वीकार करना पड़े, इसलिये श्रुति में जितने पर्व 'अर्थात् ब्रह्म प्रापक मार्ग ऊपर के स्थल में वर्णन किया गया है । वे सभी एक अर्चिरादिमार्ग पर ही है, परन्तु जिन उपासकों ने जिन पर्वों में रहकर इसका आनन्द मनाने का नहीं हो उनके लिये उन पर्वों का निरूपण नहीं किया जाता है।

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

अर्थात् 'मार्ग एक ही है, और ये सभी एक ही मार्ग पर के भिन्न-भिन्न स्थल है इस प्रकार मानने में' कोई अनुचित नहीं है । (जब पूर्व पक्षी सिद्धान्ती को कहते हैं कि) भाई, इस रीति से एक एक स्थल पर कहे जाने वाले स्थल' एक मार्ग ही है इस तरह मानते है इसलिये तुम्हारे वहां कहना पड़ता है और इस रीति से उपसंहार का आश्रय लेना पड़ेगा, कारण कि इस द्वारा ही ये स्थल वहां रखे जा सकते हैं ।'तब सिद्धांती पूर्व पक्षी को कहते हैं कि (भाई जो मैं ऐसा मानता हूं कि) वे वे उन-उन उपासक को भी उन नहीं वर्णित पर्व का उपभोग करना पड़े तो उपसंहार का आश्रय लिया है ऐसा कहा जा सकता है, परन्तु में इस प्रकार मानता ही नहीं हूं 'अर्चिरादिना' यह एक वचन है यह बात लक्ष्य में रखना अर्थात् ब्रह्म प्रापक मार्ग एक है इस प्रकार विश्वास हो और इस विश्वास के होने के पश्चात् जिसको जिन पर्व का उपभोग करना होता है उसके संबंध में इस पर्व का निर्देश स्पष्ट शब्दों में हो अर्थात् उपसंहार की आवश्यकता ही कहां रही ? आगे ऊपर 'सूत्रकार ने एक स्थान पर नहीं कहा, पर्वों ने भी वहां प्रवेश किया है और इस प्रकार उपसंहार का आश्रय लिया है इस प्रकार फिर भी सूत्रकार के मतानुसार मार्ग तो एक ही है । उपरान्त (जहां ब्रह्म प्रापक मार्ग का निरूपण है वहां) अर्चिमार्ग को लक्ष्य में रखकर ही निरूपणण किया गया है इसलिये भी ब्रह्मप्रापक अर्चिरादि मार्ग एक ही है इस प्रकार मानना उचित है ।

छान्दोग्य उपनिषद् में 'जिस तरह अर्चिमार्ग का निरूपण है वहां '**संवत्सराद् आदित्यम्**' अर्थात् संवत्सरलोक में से आदित्य लोक में जाता है ऐसा कहा है, परन्तु वायु लोक की बात नहीं कही, कौषितकी उपनिषद् में '**स एतं देवयानं पन्थानमापद्य अग्निलोकमागच्छति, स वायुलोकं, स वरुणलोकं, स प्रजापति लोकं, स ब्रह्मलोकम्**' अर्थात् ये ब्रह्मज्ञानी जीव इस देवयान मार्ग में आकर पहले अग्निलोक में जाता है, वहां से वायुलोक में, वहां से वरुण लोकमें वहां से इन्द्रलोक में, वहां से प्रजापति लोक में और वहां से ब्रह्म लोक में जाता है । इस प्रकार वायु लोक आदि की बात आती है, अब 'छान्दोग्य के आरम्भ में अर्चिलोक की बात है और कौषितकी में अग्नि लोक की बात है । वहां अर्चि और अग्नि तो एक ही है, अर्थात् इस संबंध में किस प्रकार का विचार नहीं करना । अब, प्रश्न उपस्थित होता है कि 'कौषितकी के अग्नि लोक और वायु लोग के बीच दूसरा लोक है कि नहीं? वायुलोक में किस लोक से जाने का होता है ? तब इस प्रश्न के उत्तर में (सूत्रकार) कहते है कि-

## वायुमब्दाद् अविशेष विशेषाभ्याम् ।४।३।२।

सूत्रार्थ- 'छान्दोग्य उपनिषद् में उक्त संवत्सर लोक में से (ब्रह्मज्ञानीजीव कौषितकी उपनिषद् में कहे गये) वायुलोक में जाता है' कारण कि 'अर्चिलोक से लेकर यह संवत्सर लोक तक के सभी लोक पृथ्वी लोक के साथ संबंध रखते हैं अर्थात् संवत्सर लोक (तक कोई विशेष) विशेष नहीं । (जब वायु अन्तरिक्ष का अधिपति है और) सूर्य स्वर्ग का अधिपति है अर्थात् संवत्सर लोक और सूर्य लोक के बीच में वायूलोक है यह विशेष है ।

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

सूत्रभाष्य- **'अर्चिषः अहः अह्नः आपूर्यमाणपक्षम् आपूर्यमाणपक्षात् यान् षड्उदङ् एति मासांस्तानमासेभ्यः संवत्सरं, संवत्सराद् आदित्यम्'** अर्थात् अर्चिलोक में से (ब्रह्मज्ञानी जीव) अहर्लोक में जाता है । अहर्लोक में से शुक्लपक्ष लोक में जाता है । शुक्ल पक्षलोक में से उत्तरायण लोक में जाता है, उत्तरायण लोक में से संवत्सर में जाता है और संवत्सर लोक में से आदित्य लोक में जाता है । इस प्रकार 'छान्दोग्य उपनिषद् में जो संवत्सर लोक कहा गया है । वह संवत्सर लोक के पश्चात् वायुलोक में इस प्रकार अधिक कहना चाहिये, अर्थात् संवत्सर लोक में से वायु लोक में जाता है (और) उसके पश्चात् आदित्य लोक अर्थात् सूर्यलोक के मार्ग पर आता है । इसके लिये निर्णायक हेतु अविशेष और विशेष है, और यह अविशेष और विशेष इस प्रकार है । अग्निहोत्र आदि कर्म द्वारा चित्त शुद्ध होता है, उसके के पीछे उपासना से ब्रह्मज्ञान प्राप्त होता है, और इस रीति से ब्रह्म ज्ञान प्राप्त होने के पश्चात् क्रम मुक्ति का अधिकारी जीव पहले उस लोक में जाकर वहां सुख मानता है और उन सुखों को भोगने के पश्चात् ब्रह्म को प्राप्त करता है । अब अग्नि की सहायता से सिद्ध होना वेद निहित कर्म इस पृथ्वी लोक में ही संभव है । अर्थात् सर्वप्रथम तो इसको पृथ्वी लोक में प्राप्त होने वाले सुख भोगने होते है और उसके पीछे ऊपर के लोकों के (सुख इसको भोगने होते है) अब **'पृथिवी दीक्षा, तया अग्निदीक्ष या दीक्षितः'** अर्थात् पृथिवी यह दीक्षा है, और यह अग्नि दीक्षा है उसके द्वारा जिसने दीक्षा ली है यह और **'यथा पृथिवी अग्निगर्भ '** अर्थात् पृथिवी जिस प्रकार अग्निगर्भ अर्थात् जिसके अन्दर अग्नि रहती है वैसी है । यह आदि श्रुति वाक्यानुसार पृथ्वी में अग्नि का प्राधान्य है, अर्थात् (पृथ्वी ऊपर से सर्वप्रथम) अर्चिलोक, अर्थात् अग्निलोक में जाता है । इसके पश्चात् कर्म तथा उपासना दिवसों से लेकर वह आखिरी संवत्सर तक शास्त्रविहित होता है, अर्थात् (ब्रह्मज्ञानी जीव) उन लोकमें जाकर वहां के सुखों को भोगते हैं । अब (अहर्लोक से लेकर) संवत्सर लोक तक सभी लोक पृथ्वी के साथ 'एक समान' संबंध रखते हैं, अर्थात् इसमें विशेषता नहीं, अर्थात् बीच में वायुलोक में प्रवेश नहीं कर सकते, परन्तु पृथ्वी लोक ऊपर अन्तरिक्ष लोक है और अन्तरिक्ष लोक के ऊपर स्वर्ग लोक है, अब एक श्रुति वाक्य **'वायुरन्तरिक्षस्य अधिपतिः'** अर्थात् वायु अन्तरिक्ष का अधिपति है। और दूसरा श्रुति वाक्य **सूर्योदिवोऽधिपतिः-** अर्थात् सूर्य स्वर्ग का आधिपति है- ये दोनों श्रुति वाक्य ध्यान में लेते है तो पहला वायुलोक और पीछे सूर्य लोक इस प्रकार विशेष क्रम है, अर्थात् सूर्य लोक के पहले और पृथ्वी लोक के साथ संबंध रखते संवत्सर लोक के पश्चात् वायुलोक जोड़ना चाहिये । अब कोई इस प्रकार आशंका करे कि **'ते अर्चिषमभि संभवन्ति, अर्चिषः अहः'** अर्थात् ये (ब्रह्मज्ञानी जीव) अर्चि लोक में जाते है, और अर्चि लोक में से अहर्लोक में जाते है । इस वाक्य में आगे कहे लोक का फिर फिर पंचमी विभक्ति से निर्देशकर आगे पीछे के लोक क्रम से है इस प्रकार सूचन होता है, इसलिये 'बीच में वायु लोक में प्रवेश करने की, तुम्हारे द्वारा की गयी बात आदर पात्र नहीं है तो इस के उत्तर में इस तरह कहना कि ठीक, जो उपासक को वायुलोक में जाकर वहां का सुखोपभोग नहीं करने का होता उसके लिये 'संवत्सर लोक में से सूर्य लोक में जाता है' इस प्रकार कहा है । परन्तु

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

'फलित यह हुआ है कि' ब्रह्म ज्ञानी के ऊपर भी जो भगवान् कृपा करे तो इसको (भगवान् की) भक्ति जगती है। अब जब यह भक्ति उत्कट हो तब प्रभु को इसके हृदय में प्रकट होने की इच्छा होती है, और 'इसके लिये' निज धाम जो व्यापी वैकुण्ठ,उसको हृदयाकाश में प्रकट करते हैं और व्यापी वैकुण्ठ को 'परमव्योम' शब्द से कहा गया है (परमेव्योम्नि)इस प्रकार से लौकिक प्रकार कहने के अतिरिक्त जो (परमे व्योमन्) इस तरह जो अलौकिक प्रकार 'जो उसको कहा उसके द्वारा ऐसा समझना कि (यह व्यापी वैकुण्ठ) अलौकिक पदार्थ है । अब जो 'निहितं' अर्थात् वहां रहे हुए इस प्रकार जो (श्रुति वाक्य में) कहा उसको यह बतलाने के लिये कि जो जहां हो वह वहां अवश्य दिखता है इस नियमानुसार व्यापी वैकुण्ठ में बिराजने वाले भगवान् के दर्शन अब अवश्य होंगे, अर्थात् **'यो वेद निहितं गुहायां परमे व्योमन्'** इतना श्रुत्यंश (मूल वाक्य के) (परमाप्नोति) इस भाग का विवरण रूप होने से **'नास्य प्राणा उत्क्रामन्ति, इहैव समवलीयन्ते ,ब्रह्मैव सन् ब्रह्माप्येति'** अर्थात् इस तरह के भक्त की इन्द्रियां देह से अलग नहीं होने पर परमात्मा के स्वरूप में ही लीन होती है, अर्थात् ये भक्त स्वयं भगवत् स्वरूप होकर भगवन्मय बन जाता है । इस श्रुत्यनुसार ( **परमाप्नोति** ) इस वाक्यांश का अर्थ प्राप्त होता है ।

उसके पीछे शुद्ध पुष्टि में जिसका अंगीकार है उसके आगे ऊपर क्या होता है इसका वर्णन ऋचा में 'सोऽश्नुते' इत्यादि अविशिष्ट भाग में है । यहां श्रुति का निगूढ आशय इस प्रकार है । जिस तरह प्रभु अपने लोक में प्रकट होकर लीला करते है उसी तरह अपना जो परम कृपालु स्वभाव उसको लेकर अपने में लीन हुए जो भक्त उनको भी प्रकट करते हैं और ये भक्त के अत्यन्त स्नेह से लेकर तदधीन बनकर इस भक्त को भी अपनी लीला के रस का अनुभव कराते है (और यह बात) 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा' अर्थात् ये भक्त परब्रह्म पुरुषोत्तम के संग में अपने इच्छित सभी सुख प्राप्त करता है इस प्रकार कहा है । सूत्र में जो (च) शब्द है उस द्वारा (विशेष बात) कहने वाली श्रुति उस प्रकार स्मृति में निरूपित है ऐसा अर्थ निकलता है ।

अर्थात् फलित यही हुआ कि ज्ञानमार्गीयों को अक्षर ब्रह्म की ही प्राप्ति होती है और भक्तों को पुरुषोत्तम की प्राप्ति होती है ।

**।। ब्रह्म सूत्राणु भाष्य चतुर्थाध्याय का तृतीयपाद संपूर्ण ।।**

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

## चतुर्थाध्याये चतुर्थ: पाद: ।

### १ संपद्याविर्भावाधिकरणम् ।

### संपद्याविर्भाव: स्वेन शब्दात् ॥४।४।१॥

ब्रह्मविदाप्नोति परम् (तै.२।१) इत्युपक्रम्य-सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता (तै.२।१) इति तैत्तिरीयके पठ्यते । तत्रेदं संदिह्यते । किमन्त: स्थित एवाश्नुते । इति तैत्तिरीयके पठ्यते । तत्रेदं संदिह्यते । किमन्त:स्थित एवाश्नुते । उत पुनर्जन्म प्राप्नोति । तत्रान्त्यस्त्वनुपपन्न: । न स पुनरावर्तते (का.२) तेषामिह न पुनरावृत्तिरस्ति (बृ.६।२।१५) इत्यादि श्रुतिविरोधात् कर्माभावाच्चेति प्राप्ते प्रतिवदति । संपद्य ब्रह्म संपद्यापि स्थितस्य जीवस्य प्रभोरत्यनुग्रहवशाद् रूपात्कभजनानन्ददित्सायां तत्कृत आविर्भावो भवत्येव । भगवदधीनत्वज्ञापनायास्य तत्र कर्तृत्वं नोक्तम् । ननूक्तं - न स पुनरावर्तते (का.२) इत्यादिश्रुतिविरोध: कर्माभावश्च बाधक इत्यत आह । स्वेनेति । स्वशब्दोत्र भगवद्वाची । तथा च भगवत्स्वरूपबलेनैवाविर्भाव इत्यर्थ:। एवं सत्युक्तश्रुतिर्मर्यादामार्गविषयिणीति न विरोध इति भाव:। तेषामिह प्रपञ्चे न पुनरावृत्तिरस्तीति हि श्रुतिराह । लीलाया: प्रपञ्चातीत्वात् तत्राविर्भावस्य निषेधाविषयत्वादपि न विरोध: । अत्र प्रमाणाकाङ्क्षायामाह । शब्दादिति । सोश्नते सर्वान् कामान् सह ब्रह्मणा विपश्चिता (तै.२।१) इति श्रुति: पुरुषोत्तमेन सह सर्वकामभोगं वदति । स च न विग्रहं विना संभवतीति श्रुतिबलादेव तथा मन्तव्यमित्यर्थ: ॥४।४।१॥

हेत्वन्तरमाह ।

### मुक्त: प्रतिज्ञानात् ॥४।४।२॥

अत्रोपक्रमे-ब्रह्मविदाप्नोति परम् (तै.२।१) इति वाक्येन परप्राप्तिलक्षणां मुक्तिं प्रतिज्ञाय हि तद्विवृतिरेव सोश्नुत इत्यादिना कियते । तेन पुष्टिमार्गीयमुक्तिरूपत्वमेव तस्याशनस्य सिध्यत्यतोपि हेतोस्तदाविर्भावस्य न लौकिकत्वं न चावृत्तिरूपत्वमित्यर्थ: ॥४।४।२॥

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

### आत्मा प्रकरणात् ॥४।४।३॥

ननु परस्य ब्रह्मणो निर्गुणत्वात्कामभोगस्य गुणसाध्यत्वात्सह ब्रह्मणेत्यत्र ब्रह्मपदं सगुणतत्परमतो न तस्य मुक्तिरूपत्वमित्यत आह । अत्र ब्रह्मपदेनात्मा व्यापको मायातद्गुणसंबन्धरहितो यः स एवोच्यते । कुतः । प्रकरणात् । ब्रह्मविदाप्नोति परम् (तै.२।१) इत्युपक्रम्य तत्पाठाद् गुणातीतस्यैवैतत्प्रकरणमिति तदेवात्र ब्रह्मशब्देनोच्यत इत्यर्थः ॥४।४।३॥

### अविभागेन दृष्टत्वात् ॥४।४।४॥

ननु-ब्रह्मविदाप्नोति परम् (तै.२।१) इति भिन्नं वाक्यम् ऋग्भिन्नातो नैकं प्रकरणमिति सगुणमेव तत्र ब्रह्मपदेनोच्यत इत्याशङ्क्य प्रतिवदति । पूर्ववाक्येन समविभागेनैवेयमृक् पठिता न तु विभागेन । कुतः। दृष्टवात् । ब्रह्मविदिति वाक्यानन्तरं तत्पूर्वोक्तमर्थं प्रतिपाद्यत्वेनाभिमुखीकृत्यढेर्गुक्तेति श्रुतिर्दृश्यते । तदेषाभ्युक्तेति । तेन पूर्ववाक्योक्तार्यम धिकृत्यैवर्गुच्यत इति गुणातीतमेव तदत्र वाच्यमित्यर्थः ॥४।४।४।१॥

### २ ब्राह्माधिकरणम् ।

### ब्राह्मेण जैमिनिरूपन्यासादिभ्यः ॥४।४।५॥

पूर्वेण मुक्तो जीवो भगवदनुग्रहातिशयेच्छातो बहिराविर्भूतो गुणातीतेन पुरुषोत्तमेनैव सह सर्वान् कामानश्नुत इति सिद्धम् । अथ तत्रैवेदं विचार्यते। आविर्भूतो जीवः प्राकृतेन शरीरेण भुङ्क्त उताप्राकृतेनेति । तत्र भोगस्य लौकिकत्वे तदायतनस्यापि तादृशेनैव भवितव्यमिति मन्वानं प्रत्याह । ब्राह्मेण ब्रह्मसंबन्धिना ब्रह्मणा भगवतैव स्वभोगानुरूपतया संपादितेन सत्यज्ञानानन्दात्मकेन शरीरेण पूर्वोक्तानश्नुत इति जैमिनिराचार्यो मनुते । तत्र हेतुरुपन्यासादिभ्य इति । ब्रह्मविदाप्नोति परमिति ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय तदर्थस्यैवोपन्यासोग्रिमयर्चा क्रियते सोश्नुत इत्यादिना । तथा च परप्राप्तेर्मुक्तिरूपत्वात् पुष्टिमार्गीयायास्तस्या एवंरूपत्वादक्षरब्रह्मणः पुरुषोत्तमायतनरूपत्वात्तदात्मकमेव शरीरं तस्य वक्तुमुचितं न तु प्राकृतम् ।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

एतद्बोधनायैवाग्रेऽन्नमयादीनि विभूतिरूपाण्युक्तानि । भक्तशरीरे प्रतीयमानानामर्थानां विभूतिरूपत्वेन ब्रह्मात्मकत्वं तेन साधितं भवति । इदमेवादिपदेन बहुवचनेन च ज्ञाप्यते । एतदानन्दमयाधिकरणे प्रपञ्चितमतो नात्र पुनरुच्यते तत्र कर्मवादी जैमिनिरेवं मनुते तत्रान्येषामेवमङ्गीकारे किमाश्चर्यमिति ज्ञापनाय तन्मतोपन्यासः कृतः ॥४।४।५॥

## चितितन्मात्रेण तदात्मत्वादित्यौडुलोमिः ॥४।४।६॥

स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः (बृ.४।५।१३) इति श्रुतौ घनपदेन ज्ञानात्मकविग्रहात्मत्त्वं ब्रह्मणो बोध्यते । अन्यथा न वदेत् । प्रयोजनाभावात् । तथा च तादृशेन सह भोगकर्त्रा तादृशेनैव भाव्यमिति चिति चिद्रूपे ब्रह्मणि तन्मात्रेण चिन्मात्रेण रूपेण कामान् भुङ्क्ते न तु विग्रहेण । श्रुतौ जीवस्य तथात्वस्यानुक्तेः । पूर्णानन्दत्वाद्भगवतस्तत्संबन्धेन तदानन्दनुभवतीत्यर्थः संपद्यते । चिदात्मत्वं जीवस्य यतो नैसर्गिकमित्यौडुलोमिराचार्यो मनुते । अशरीरं वाव (छां.८।१२।१) इति श्रुतिरेतादृशान्यविषयिणीति ज्ञेयम्। मुक्तिदशायां तदनुभवस्य भगवदिच्छाविषयत्वाभावान्न तथा । तथा चैतदेतज्जातीयकानन्दानुभवोऽस्य भवत्विति भगवदिच्छैव श्रुतौ कामशब्देनोच्यते ॥४।४।६॥

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥४।४।७॥

परमाचार्यो बादरायणस्तु नैवं मनुते । ब्रह्मविदाप्नोति परमित्यस्योपन्यास एवमपि विग्रहवत्त्वेनापि कृतो यतः । तथाहि । यो वेद निहितं गुहायाम् (तै.२।१) इत्यत्र गुहाया उक्तत्वात्तस्या विग्रह एव संभवात् । किंच । प्रथमान्तोपस्थितत्वेन प्राप्नोतीत्युक्त्वा च ब्रह्मविदः परप्राप्तौ स्वातन्त्र्यं ज्ञाप्यते । तदेव ब्रह्मणा सहेति पदेनोपन्यस्तम् । तेन ब्रह्मणोऽपि तत्समानक्रियावत्त्वं ज्ञाप्यते । परं त्वप्राधान्येन । तथा च भक्तस्यैव कामा वक्तुमुचितास्ते च न विग्रहं विना संभवन्ति । किंच । विपश्चितेति विशेषणेन विविधं पश्यच्चिद्रूपत्वमुच्यते । कामभोगोक्तिप्रस्ताव एतदुक्त्या तदुपयोग्येव सर्वं वाच्यम् । एवं सति भक्तविविधभावान् पश्यति स्वयंभोगचतुरश्चेत्युक्तं भवति ।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

एतेनापि भक्तविग्रहः सिध्यति । ननु विग्रहस्यागन्तुकत्वेन लौकिकत्वादलौकिकेन ब्रह्मणा भोगो विरुद्ध इत्यत आह । पूर्वभावादिति । भक्तप्राप्तेः पूर्वमेव भगवद्दित्सितभोगानुरूपविग्रहाणां सत्त्वान्न विरोधः । किंच । उक्तश्रुतिसूत्रैः पुरुषोत्तमेन सह भक्तस्य कामभोगो निरुपितः । स यावतार्थेन विना नोपपद्यते तावान् स श्रुत्यभिमत इति मन्तव्यम् । तथा च ब्रह्मसंबन्धयोग्यानि शरीराणि नित्यानि सन्त्येव। यथानुग्रहो यस्मिञ्जीवे स तादृशं तदाविश्य भगवदानन्दमश्नुत इति सर्वमवदातम् ॥४।४।७॥

संकल्पादेव च तच्छ्रुतेः ॥४।४।८॥

एवं परप्राप्तिः केषांचिदेव भवति । तत्र हेत्वपेक्षायामाह । भजनानन्दं दातुं यमेव संकल्पविषयं करोति स एवैवं प्राप्नोतीति भगवत्संकल्प एव तत्र हेतुः । तत्र प्रमाणमाह । तच्छ्रुतेः । नायमात्मेत्युपक्रम्य-यमे-वैष वृणुते तेन लभ्यः (मुं.३।२।३) इति श्रुतिः श्रूयतेतः स एवात्र हेतुः। श्रुतौ प्रवचनादिदोषः कृत इत्यत्राप्येवकार उक्तः । चकारात्तज्जनितैवैतदनुरूपा परमार्तिः संगृह्यते ॥४।४।८॥

अत एव चानन्याधिपतिः ॥४।४।९॥

यतो हेतोः साधनं फलं चोक्तरीत्या स्वयमेव नान्योतो हेतोस्तेषां हृदि साधनत्वेन फलत्वेन प्रभुरेव स्फुरति नान्यस्तेनानन्यास्ते । तेषामेवाधिपतिः पुरुषोत्तमः । अन्यत्राधिपत्यं विभूतिरूपैः करोत्यतः सर्वस्याधिपतिरिति श्रुतिरपि तदभिप्रायेणैवेति भावः। चकारात्-मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि (भा.९।४।६८) इति भगवद्वाक्यं संगृह्यते। अन्यथा सर्वज्ञस्याकुण्ठिज्ञानशक्तेरेवं कथनमयुक्तं स्यादतः पुष्टिमार्गोनुग्रहैकसाध्यः प्रमाणमार्गाद्विलक्षणस्तत्र विश्वासश्च तथेति सिद्धम् ॥४।४।९॥

अभावं बादरिराह ह्येवम् ॥४।४।१०॥

मुक्तोपि जीवः पुष्टिमार्गेङ्गीकृतो भगवद्दत्तं विग्रहं प्राप्य भजनानन्दं प्राप्नोतीति सिद्धम् । अत्र प्रत्यवतिष्ठते बादरिराचार्यो मुक्तस्य देहाद्यभावं मनुते । तत्र हेतुराह । ह्येवमिति । ब्रह्मविदो हि मुक्तिरुच्यते । यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति (बृ.२।४।१४) इत्याद्युक्त्वायत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

(बृ.२।४।१४) इत्यादिना द्वितीयज्ञाननिषेधमाह ब्रह्मविद: श्रुति:। तथा च तस्य कामभोगवार्ता दूरतरेति तदाक्षेप्यदेहोपि तथा ॥४।४।१०॥

भावं जैमिनिर्विकल्पामननात् ॥४।४।११॥

जैमिनिराचार्यस्तु मुक्तस्य पुंसो देहादेर्भावं सत्तां मन्यते । तत्र हेतुर्विकल्पेत्यादि । ब्रह्मविदाप्नोति परमिति श्रुत्या ब्रह्मज्ञानस्य तत्प्राप्तिसाधनत्वमुच्यते । नायमात्मा (मुं.३।२।३) इति श्रुत्या तु वरणमात्रप्राप्यत्वम् । सोश्नुत इत्यादिना च परप्राप्त्युपन्यास: क्रियते । इहैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येति (बृ.४।४।२२) इति च पठ्यते । एवं सति मिथो विरोधे तदभावायोक्तव्याख्यानरीत्या ज्ञानमार्गीयस्य ब्रह्मज्ञानेनाक्षरब्रह्मप्राप्ति: पुष्टिमार्गीयभक्तस्य तु सोश्नुत इत्यनेनोक्ता परप्राप्तिरिति व्यवस्थितविकल्प एव श्रुत्यभिमत इति ज्ञायते । तेन नायमात्मेति श्रुति: परप्राप्तिविषयिणी । इहैवेत्यादिश्रुतिस्तु मर्यादामार्गीयविषयिणी मन्तव्यम् । एवं सति पुष्टिमार्गीयस्य भोगसाधनात्मकविग्रहवत्त्वं निष्प्रत्यूहं सिध्यति । तत् केन कं पश्येदित्यादिना तु ब्रह्मज्ञानसामयिकीं व्यवस्थामाह न तु तदुत्तरकालीनपरप्राप्तिसामयिकीमिति किमनुपपन्नम् ॥४।४।११॥

द्वादशाहवदुभयविधं बादरायणोत: ॥४।४।१२॥

ब्रह्मणा सह सर्वकामाशनप्रयोजकं शरीरं शरीरत्वस्य भूतजन्यत्वव्याप्यत्वात्तदभावेनाशरीररूपं तद्भोगायतनत्वेन शरीररूपमपीति बादरायण आचार्यो मन्यते । अत्र हेतुरत इति । तथाविधश्रुतेरित्यर्थ:। तथाहि । सुखं त्वेव विजिज्ञासितव्यमित्युक्त्वा तत्स्वरूपमाह। यो वै भूमा तत्सुखम् (छां.७।२३।१) इत्युपक्रम्याग्र उच्यते । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा (छां.७।२४।१) इत्यनेन केवलभावविषयत्वं पुरुषोत्तमलक्षणमुक्त्वा केवलभाववतो भक्तस्य विप्रयोगगसामयिकीं व्यवस्थामाह स एवाधस्तात् स उपरिष्टात् स पश्चात्स पुरस्तात् (छां.७।२५।१)इत्यादिना । तत:- स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् (छां.७।२५।२) इति पूर्वावस्थामनूद्य संयोगावस्थामाह ।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

आत्मरतिरात्मकीड आत्ममिथुन आत्मानन्दः (छां.७।२५।२) इति वाक्येन सोश्नुत इति श्रुतिसंवादिनमर्थमुक्त्वा भक्तस्वरूपमाह। तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राणः (छां.७।२६।१) इत्युपक्रम्य-आत्मत एवेदँ सर्वम् (छां.७।२५।२) इति वाक्येन सोश्नुत इति श्रुतिसंवादिनमर्थमुक्त्वा भक्तस्वरूपमाह । तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राणः (छां.७।२६।१) इत्युपक्रम्य-आत्मत एवेदँ सर्वम् (छां.७।२६।१) इति । तेनाशरीरत्वं सिध्यति । अन्ययप्रयोगेणाविकृतादेव पुरुषोत्तमाप्राणाद्याविर्भाव उच्यते। अत्र ल्यब्लोपे पञ्चमी । पूर्वं विरहदशायां प्राणादयो भगवत्येव लीना आसंस्ततस्तत्प्राक्टये तत एव प्राणादयोपि संपन्ना इति तत्प्राप्तेर्निमित्तत्वं यतो विभूतिरूपाणामपि पुरुषोत्तमे लयो नानुपपन्नः । आत्मरतिरित्यादिना सोश्नुत इत्यनेन च शरीरत्वम् । जैमिनिरप्यत एव ब्राह्मेणेति मनुते। एकस्य विरुद्धोभयधर्मवत्त्वममन्वानं प्रति वैदिकं दृष्टान्तमाह । द्वादाहवदिति । यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेत (तै.सं.७।२।९) इति चोदनया द्विरात्रेण यजेत (तै.सं.७।१।४) इत्यादिवन्नियतकर्तृकत्वेनाहीनत्वं गम्यते । द्वादशाहमृद्धिकामा उपेयुः। य एवं विद्वाँसः सत्रमुपयन्ति (तै.सं.७।५।१) इति श्रुत्या च सत्रत्वं बहुकर्तृकस्य गम्यते । एवमेव द्वादशाङ्गशरीरेन्द्रियप्राणान्तः करणात्मभिरश्नुत इति सत्रतुल्यत्वम् । वस्तुतो भगवद्धि भगवद्विभूतिरूपत्वेन ब्रह्मात्मत्वेनैकरूपत्वमतो द्वादशाहवदुभयविधम् । सत्रे प्रत्येकं चेतनानां यजमानानां फलभागित्ववदत्रापि तादृग्भक्तदेहादीनामपि ब्रह्मात्मकत्वाचेतनत्वमेवेत्यप्यनेन दृष्टान्तेन ज्ञाप्यते । अत एव श्रीभागवते-देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम् (भा.७।१।३४) इति गीयते ॥४।४।१२॥२॥

## ३ तत्त्वभावाधिकरणम् ।

### तत्त्वभावे संध्यवदुपपत्तेः ॥४।४।१३॥

अथेदं चिन्त्यते । भगवत्स्वरूपे प्राकृतशरीर इवावस्था दृश्यन्ते तत्कालीनैः पुंभिरिति कथमप्राकृतत्वमुपपद्यत इति तत्रोपपत्तिमाह । तद्दर्शनस्य

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

वास्तववस्तुविषयकत्वव्यवच्छेदेन पूर्वपक्षव्युदासाय तुशब्दः । तत् प्राकृततुल्यदर्शनमभावे तथात्वस्याभाव एव भवति । न तु तत्र प्राकृता धर्माः सन्ति । नन्वविद्यमानानामर्थानां कथं दर्शनमुपपद्यत इत्यत आह । संध्यवदिति । स्वप्ने यथा वासनावशादविद्यमानानामप्यर्थानां भवति तथा भगवदिच्छावशात्तत्रापि प्राकृततुल्यत्वदर्शनस्योपपत्तेर्न प्राकृतत्वं तत्र ज्ञेयमित्यर्थः । तथा च श्रुतिः । संध्यं तृतीयँ स्वप्नस्थानं तस्मिन् संध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च परलोकस्थानं च । अथ यथाक्रमोयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति। स यत्रायं प्रस्वपिति (बृ.४।३।९) इत्युपक्रम्य स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति - न तत्र रथा न रथयोगा न पन्थानो भवन्ति (बृ.४।३।१०) इत्यादिरूपा । एवमेव भगवानासुराणां प्राकृतगुणे तमस्येव दुःखात्मके लयं चिकीर्षुः स्वस्मिन् प्राकृतत्वबुद्धिसंपादनाय तादृशीमिव लीलां दर्शयत्यतो न प्राकृतत्वशङ्कागन्धोप्यत्र । अत एव भगवतोक्तम्-मामात्मपर-देहेषु प्रद्विषन्तोभ्यसूयकाः (भ.गी.१६।१८) इत्युपक्रम्य-ततो यान्त्यधमां गतिम् (भ.गी.१६।२०) इति । तेषामासुरत्वेन मुक्त्यनधिकारित्वात् तथाकरणमतः सुष्ठूक्तं संध्यवदुपपत्तेरिति ॥४।४॥१३॥

## भावे जाग्रद्वत् ॥४।४।१४॥

लौकिकवद्भासमाने लीलापदार्थे यद्दर्शनं भक्तानां तत्तु भावे विषये विद्यमाने सति भवति । अत्र दृष्टान्तमाह । जाग्रद्वत् । यथा मोहाभाववतः पुंसः सत एवार्थस्य दर्शनं तथेति । एताभ्यां सूत्राभ्यामेतदुक्तं भवति । सोश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता (तै.२।१) इति श्रुत्या भक्तकामपूरणाय भगवान् लीलां करोतीति गम्यते । यद्दर्शनश्रवणस्मरणैर्भक्तानां दुःखं भवति तादृशीमपि तां करोतीति श्रूयते । यथा सौभयुद्धे मोहवचनानि । हस्तादायुधच्युतिः । प्रभासीयलीला च । उक्तरीत्या सोश्नुत इति श्रुत्या परब्रह्मत्वमवगम्यते । उक्तलीलया तद्वैपरीत्यं च । एवं सत्येकस्या वास्तवत्वमन्यस्या अवास्तवत्वं वाच्यम् । ते ते धशमान्युष्मसि (तै.सं.१।३।६।१)

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

विष्णो: कर्माणि पश्यत (तै.सं.१।३।६।२) तद्विष्णो: परमं पदम् (तै.सं.१।३।६।२) तद्विप्रासो विपन्यव: (ऋ.सं. १।२२।२१) इत्यादिश्रुतिभि: । सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । विश्वं नारायणं देवमक्षरं परमं पदम् । विश्वत: परमं नित्यं विश्वं नारायण हरिम् । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति । पतिं विश्वस्योत्मेश्वर शाश्वतं शिवमच्युतम् (म.ना.१३।१) इत्यादिभिश्च शुद्धब्रह्मणस्तद्विपरीतदर्शनेवश्यं हेतुर्वाच्य: । स त्वासुरव्यामोहनमेवेति पूर्वसूत्रेणोपपादित: । भक्तेस्य: स्वरूपानन्ददानाय-लोकवत्तु लीलाकैवल्यम् (ब्र.सू.२।१।३३) इति न्यायेन या लीला: करोति यथा रिङ्गणादिलीला भगवतो नैसर्गिकधर्मरूपानन्दात्मकत्वेन विद्यमाना एव ता भक्ता: पश्यन्तीति द्वितीयसूत्रेणोक्तम् । अत एव लीलाया अनेकरूपत्वाद् ब्रह्मणश्च श्रुतौ सैन्धवदृष्टान्तेनैकरसत्वनिरूपणाच्छुद्धब्रह्मधर्मत्वं न संभवतीति शङ्कानिरासाय कैवल्यमित्युक्तम् ।

साक्षी चेता केवलो निर्गुणश्च (श्वे.६।११) इत्यादिश्रुतिषु यान्यधर्मराहित्यलक्षणा केवलतोक्ता सा लीलात्मिकैव लीलाविशिष्टमेव शुद्धं परं ब्रह्म न कदाचिंतद्रहितमित्यर्थ: पर्यवस्यति । तेन स्वरूपात्मकत्वं लीलाया: पर्यवस्यति तेन च नित्यत्वम् । एतद्विद्विन्मण्डने प्रपञ्चितम् । अथवा लीलैव कैवल्यं जीवानां मुक्तिरूपम् तत्र प्रवेश: परमा मुक्तिरिति यावदित्यर्थ: ॥४।४।१४॥३॥

## ४ प्रदीपाधिकरणम् ।

### प्रदीपवदावेशस्तथाहि दर्शयति ॥४।४।१५॥

ननु पूर्णज्ञानक्रियाशक्तिमता ब्रह्मणा तुल्यभावेन तत्रापि प्रधानभावं प्राप्य कामभोगकरणमपूर्णज्ञानकियावतो भक्तस्यानुपपन्नमित्याशङ्कायां तत्रोपपत्तिमाह । नहि तदा नैसर्गिकज्ञानकियाभ्यां तथा भोक्तुं शक्तो भवति किंतु भगवांस्तस्मिन्नाविशति यदा तदायमपि तथैव भवतीति सर्वमुपपद्यते । एतदेवाह । प्रदीपवदिति । यथा प्राचीन: प्रकृष्टो दीप: स्नेहाधीनस्थितिश्च भवति स्वयं तथात्रापीत्यर्थ:। अत्र प्रमाणमाह । तथाहि दर्शयति श्रुति: । भर्तासंभ्रियमाणो बिभर्ति । एको देवो बहुधा निविष्ट: (तै.आ.३।१४)

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

इति । सर्वान् कामानित्युक्तत्वाद् यस्य कामस्य भोगो यथा निवेशे सति तत्तथा तदा निवेश इति बहुधा निवेश उक्त: । अयं निवेशो नान्तर्यामित्वेन तस्यैकधैव प्रवेशात् । निसर्गत: सर्वेषां जीवानां भगवान् भवत्येव प्रभुर्यद्यपि तथापि यं स्वीयत्वेन वृणुते तस्य विवाहित: पतिरिव भर्ता सन् वरणजस्नेहातिशयेन भक्तेनापि भ्रियमाण: सन् स भक्त इव स्वयमपि तं स्वस्मिन् बिभर्ति । अत एव स्नेहराहित्येनायोगोलकादिकं विहाय प्रदीपं दृष्टान्तमुक्तवान् व्यास:। अत एव देवपदमुक्तम् । स्वरूपानन्ददानाद्भावोद्दीपनात् पूतनादिमुक्तिदानेन स्वमाहात्म्यद्योतनाद्वैकुण्ठादिस्थितेश्च। तदुक्तं निरुक्ते-दिवो दानाद्वा । दीपनाद्वा । द्योतनाद्वा । द्युस्थानो भवतीति वा यो देव: (नि.७।१५) इति । किंच भक्तानां कामभोजनार्थं क्रीडाकरणात् क्रीडायामेव जयेच्छाकरणाद्भक्तै: सह व्यवहारकरणाद् भक्तेषु स्वमाहात्म्येच्छादिद्योतनाद् - न पारयेहं (भा.१०।३०।३७) न त्वादृशीं प्रणयिनीम् (भा.१०।३०।५५) इत्यादिभि: स्तुतिकरणात् भक्तप्रपत्तिदर्शनेन कालीयदमनादौ मोदकरणात् तेष्वेव भक्तिमदकरणात् ते स्वप्नेपि प्रियमेव पश्यन्तीति स्वप्रकरणात्तेषां कान्तिकरणादिच्छाकरणाद्वा तन्निकटे गमनादपि देव:। तदुक्तं धातुपाठे-दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु (पा.धा.पा.दि.१) इति । एवं सति युक्तमेव तेषां तथात्वमिति हिशब्देनाह ॥४।४।१५॥

ननु-अस्थूलमनण्वहस्वम् (बृ.३।८।८) इत्याद्यनन्तरं पठ्यते । न तदश्नोति कश्चन । न तदश्नोति कश्चन (बृ.३।८।८) इति । उक्तश्रुतौ च ब्रह्मणा सह जीवस्य भोग उच्यते। तथा च सगुणदिनर्गुणभेदेन विषयभेदोवश्यं वाच्यो विरोधपरिहारायेत्यत उत्तरं पठति ।

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥४।४।१६॥

इहायमाशय: । प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय: (ब्र.सू.३।२।२२) इत्याद्यधिकरणे - परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलकिया च (श्वे.६।८) इत्यादिश्रुतिभ्यश्च प्राकृता एव धर्मा निषिध्यन्ते

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

ब्रह्मण्यप्राकृता एव बोध्यन्तेन्यथा तद्बोधनमेव न स्यान्निषेधकवाक्य एव तद्बोधनमपि न स्यात् - एतस्यैवाक्षरस्य प्रशासनम् (बृ.३।८।९) इत्यादिरूपमतोचन्त्यानन्तशक्तेर्भगवत: का वा कार्याक्षमता यया प्राकृतान् गुणानूरीकुर्यादतो निर्गुणमेव सदा । सर्वत्र भगवद्रूपमिति मन्तव्यम् । एवं सति-तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमा: सर्वा: प्रजा अहरर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्ति (छां.८।३।२) इति च्छान्दोग्यश्रुते: प्रस्वापदशायां न कश्चिद् ब्रह्माश्नोति तच्च न कंचनेति तद्विषयिणी निषेधिका श्रुति:। ब्रह्मविदाप्नोति परम् (तै.२।१) इति श्रुत्युक्तपरब्रह्मप्राप्तिदशाविषयिणी भोगबोधिका सेति न विरोधगन्धोपि । एतदेवाह । स्वाप्यय: प्रस्वाप:। स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते (छां.६।८।१ ) इति श्रुते:। संपत्तिर्ब्रह्मसंपत्तिरुक्तरीत्या पुष्टिमार्गीयो मोक्ष एतयोरन्यतरापेक्षमुभयश्रुत्युक्तमित्यर्थ:। भगवत्कर्तृकभोगस्य लीलारूपत्वात् तस्याश्च-लोकवत्तु लीलाकैवल्यम् (ब.सू.२।१।३३) इत्यत्र मुक्तित्वेन निरूपणात् तत्वाप्ते: संपद्रूपत्वं युक्ततरमिति हिशब्दार्थ:॥४।४।१६॥४॥

### ५ जगद्व्यापाराधिकरणम् ।

### जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥४।४।१७॥

ब्रह्मणा सह भोगकरणं लौकिकव्यापारयुतमुत नेति संशये तद्युतमिति पूर्व: पक्षस्तथा सति मुक्तित्वभङ्गात् पूर्वोक्तमनुपपन्नमिति प्राप्त आह । जगदित्यादि । पूर्वोक्तस्य जगत्संबन्धी लौकिको यो व्यापार: कायवाङ्मनसां तद्वर्जं तद्रहितं भोगकरणम् । तत्र हेतू आह । प्रकरणादसंनिहितत्वाच्चेति । ब्रह्मविदाप्नोति परमित्युपक्रमेण मुक्तिप्रकरणात् तत्र लौकिकव्यापारोसंभावित: । किंच । लीलाया: कालमायाद्यतीतत्वेन प्राकृतं जगद् दूरतरमितोपि हेतोर्न तत्संभव:। कदाचिल्लोके लीलाप्रकटनेच्छायां तदधिष्ठानत्वयोग्ये मथुरादिदेशेतिशुद्धे गोलके चक्षुरिन्द्रियमिव स्थापयित्वा लीलां करोति । तदापि लीलामध्यपातिनां न लौकिकव्यापारसंभव: । न हि चक्षुरिन्द्रियं गोलककार्यं करोति न वा तन्नाशे नश्यति । एतत्सर्वं-दिवीव चक्षुराततम्

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

(ऋ.१।२२।२०) इति श्रुतिव्याख्याने विद्वन्मण्डने प्रपञ्चितम् । किंच छान्दोग्ये-भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य: (छां.७।२३।१) इत्युक्त्वौ भूम्नो लक्षणमाह । यत्र नान्यत् पश्यति नान्यच्छ्रृणोति नान्यद् विजानाति स भूमा (छां.७।२८।१) इति । अत्र नान्यद्विजानातीत्येतावतैव चारितार्थ्येऽपि यदिन्द्रियव्यापारो निषिद्धस्तत्राप्यन्यविषयकस्तेन भगवद्विषयक: स सिद्धो भवतीति जगद्व्यापारराहित्यं सिद्धम्। तत्र तेन भगवत एव स्वतन्त्रं फलत्वमुक्तं भवति । न हि सुखस्यान्यत् प्रयोजनमस्ति॥४।४।१७॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्ते: ॥४।४।१८॥

नन्वेतत्प्रकरण एव छान्दोग्ये पठ्यते । सर्वं हि पश्यति (छां.७।२६।२) इति सर्वविषयकप्रत्यक्षमुपदिश्यत इत्यन्यविषयव्यापारराहित्यं नोपपद्यत इत्याशङ्क्य समाधत्ते । आधिकारिकेत्यादिना । अत्रेदमुच्यते । सोऽश्नुते (तै.२।१) लोकवत्तु लीलाकैवल्यम् (ब.सू.२।१।३३) इत्यादिभिर्नित्यलीलामध्यपातित्वं तस्योच्यते । नान्यत् पश्यति (छां.७।२४।१) इत्यादिश्रुतिवशाज्जगद्व्यापारवर्जं भोगकरणं पूर्वसूत्रेणोक्तम् । अत्रेदं विचार्यते । नान्यत्पश्यतीति प्रकरण एव सर्वँ ह पश्यति (छां.७।२६।२) इति सर्वविषयकं दर्शनमुच्यते तत् कथं पूर्वोक्तमुपपद्यत इति । किं च । एकस्यैव भक्तस्य देशकालभेदेन क्रियमाणानेकलीलासंबन्धित्वं भवति । तच्च लीलानित्यतायां न घटते । यतस्तत्तद्देशतत्तत्कालसंबन्धिनी सा नित्या । एवं सत्येकस्यानेकरूपत्वं जीवस्य न संभवतीति तन्नित्यत्वमपि न सिध्यतीति । तत्रोच्यते । श्रुतौ सर्वपदेन न जगदुच्यते किंतु यस्यां यस्यां लीलायां देशकालभेदेन कियमाणायामधिकृतो य एको भक्तस्तस्यैव तावन्ति रूपाणि सन्ति तान्याधिकारिकाणीत्युच्यन्ते । तेषां मण्डलं समूहस्तत्र स्थितवस्तुमात्रमुच्यत इति नानुपपन्नं किंचित् । अत एवाग्रे पठ्यते । सर्वमाप्नोति सर्वश: (छां.७।२६।२) इति । स एकधा भवति त्रिधा भवति पञ्चधा भवति सप्तधा नवधा चैव पुनश्चैकादश: स्मृत:। शतं च दश चैकश्च सहस्राणि च विंशति: (छां.७।२६।२) इति । यथा मण्डलवर्तिषु पुंसु नैकस्य प्राथम्येन प्राधान्यं वक्तुं शक्यं तथैतेष्वपि रूपेष्विति ज्ञापनाय मण्डलपदमुक्तम् ॥४।४।१८॥

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

विकारावर्ति च तथाहि स्थितिमाह ॥४।४।१९॥

नन्वेवं सति श्वस्त्वद्गेहमायास्य इति प्रभुणोक्ते तदाशया तत्स्थितिर्नोपपद्यते । नित्यत्वाल्लीलायास्तस्य कालस्य तदागमनस्य च तदापि वर्तमानत्वात् । तथा प्रभूक्तिरपि नोपपद्यत इत्याशङ्क्य समाधत्ते । इह भगवल्लीलाप्रकृतिस्तद्विरुद्धोर्थो विकार इत्युच्यते । तत्र न वर्तते तज्ज्ञानं तादृशं च भवति यत्स्वरूपं प्रति तथा वदति तस्य स्वगेहे तदा भगवत्स्थितिज्ञानं न भवतीत्यर्थः। उपलक्षणं चैतदतो यद्देशकालविशिष्टा यादृशी या लीला तस्यास्तादृश्या एव तल्लीलामध्यपातिनो भक्तस्य ज्ञानं नान्यविषयकमिति ज्ञेयम् । अत एव द्वितीयस्यापि मह्यं पूर्वमुक्तमासीत्तेनागत इत्येव ज्ञानं भवति । तदैव हि रसोदयोतो रसस्वरूपमध्यपातित्वाल्लीलाया रसस्य च भगवदात्मकत्वाद्भगवद्रूपत्वेन सर्वमुपपद्यते लीलायाम् । अत्र प्रमाणमाह। तथाहि स्थितिमाहेति । सर्वमाप्नोति सर्वशः (छां.७।२६।२) इति श्रुतिरेकस्यैव भक्तस्य सर्वशः सर्वैः प्रकारैः सर्वलीलारसमाप्नोतीति वदन्त्युक्तरीत्यैव लीलायां स्थितिमाहेत्यर्थः। अतो वस्त्वेवेदमलौकिकरीत्यनुसरणं न युक्तं किं त्वलौकिकरीत्यनुसरणमेव युक्तमिति हिशब्देन द्योत्यते । एतेन रसो वै सः (तै.२।७) इति श्रुतेर्लीलाविशिष्ट एव प्रभुस्तथेति तादृश एव परमफलमिति ज्ञापितं भवति ॥४।४।१९॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥४।४।२०॥

न च लौकिकयुक्तिविरोधोत्र बाधकत्वेन मन्तव्यः किंतु साधकत्वेन । यतः प्रत्यक्षानुमाने श्रुतिस्मृती अपि लौकिकयुक्त्यप्रसारेणालौकिके भगवत्संबन्धिन्यर्थेन्यथाभावनं निषेधति । नैषा तर्केण मतिरापनेया (क.१।२।९) । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । (श्वे.६।८) अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत् (म.भा.भी.५।१२) । श्रीभागवते च-न हि विरोध उभयं भवत्यपरिगणितगुणगण ईश्वरेनवगाह्यमाहात्म्येर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाशयदुरवग्रहवादिनां विवादानवसर (भा.६।९।३६) इत्यादिवाक्यैरचिन्त्यानन्तशक्तिमत्त्वेन भगवत्स्वरूपस्यैव परमफलत्वं प्रदर्श्यते। किंच । ता वां वास्तून्युष्मसि गमध्यै यत्र गावो

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

भूरिशृङ्गा अयास:। अत्राह तदुरुगायस्य वृष्ण: परमं पदमवभाति भूरि (ऋ.सं.२।२।२४) इति ऋग्वेदे पठ्यते । किंचित्पाठभेदेन यजु:शाखायामपि । ता तानि वास्तूनि वां गोपीमाधवयो: संबन्धीनि गमध्यै प्रसादत्वेन प्राप्तुमुष्मसि कामयामहे तानि कानीत्याकाङ्क्षायां गूढाभिसंधिमुद्घाटयति यत्र श्रीगोकुले गावो भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयो वसन्तीति शेष:। ग्राम्यारण्यपशूपलक्षणार्थमुमयोरेव ग्रहणम् । अत्राह भूमावेव तदुरुगायस्य बहुगीयमानस्य वृष्ण: भक्तेषु कामान् वर्षतीति वृषा तस्य पदं स्थानं वैकुण्ठं ततोपि परममधिकमत्र विचित्रलीलाकरणात् । भूरि यमुनापुलिननिकुञ्जगोवर्धनादिरूपत्वेन बहुरूपम् । तथा च तत्रत्यानि तानि कामयामह इति वाक्यार्थ: संपद्यते। एतेन लीलासंबन्धिवस्तूनां यत्र फलत्वेन बहुरूपप्रार्थनं तत्र तल्लीकाकर्तु: परमफलत्वे किं वाच्यमित्याशयो ज्ञाप्यते । अथ ह वाव तव महिमामृतसमुद्राविप्रुषा सकृल्लीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतसुखलेशाभासा: परमभागवता: (भा.६।९।३९) इति श्रीभागवते। एतेनापि कैमुतिकन्यायेन प्रभोरेव स्वत: पुरुषार्थत्वं ज्ञाप्यते । फलप्रकरणत्वात्तदेवाचार्यतात्पर्यविषय इति ज्ञायते ॥४।४।२०॥

## भोगमात्रसाम्यलिङ्गाच्च ॥४।४।२१॥

इतोपि हेतो: पुरुषोत्तमस्वरूपमेव परमं फलमिति ज्ञायते । यत: सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता (तै.२।१) इति श्रुतौ भक्तसाम्यमुच्यते । तच्च पुरुषोत्तम एव संभवति । यत: सख्यं दत्त्वा तत्कृतात्मनिवेदनमङ्गीकुर्वन्नतिकरुण: स्वस्वरूपानन्दमनुभावयंस्तं प्रधानीकरोति । अन्यथा भक्तोनुभवितुं न शक्नुयात् । युक्तं चैतत् । प्राप्तं फलं स्वाधीनं भवत्येवान्यथा फलत्वमेव न स्यात् । तथा चास्माल्लिङ्गादपि प्रभोरेव परमफलत्वं सिध्यति । न तत्समश्चाभ्यधिकश्च दृश्यते (श्वे.६।८) इति श्रुतिविरोधपरिहाराय मात्रपदम्। न चात्र कामभोगस्य फलत्वं शङ्कनीयम् । आप्नोति परमित्येतद्व्याकृतिरूपत्वात् स्वरूपानुभवरूपत्वाद् भोगस्य । अनुभूयमानस्यैव हि सुखस्य लोके पुरुषार्थत्वोक्ते: ॥४।४।२१॥

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

एवं भगवत: स्वत: पुरुषार्थरूपत्वमुक्त्वा कर्मफलभोगानन्तरमावृत्तिवदत्राप्यावृत्तिर्भविष्यतीत्याशङ्कानिरासायोत्तरं पठति ।

अनावृत्ति: शब्दादनावृत्ति: शब्दात् ॥४।४।२२॥

अनावृत्तिर्भक्तानां ज्ञानिनां चोच्यते । तत्र मानं शब्द:। सचतयोर्ध्वमायन्नमृतत्वमेति (छां.८।६।६)। न तेषां पुनरावृत्तिरेतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते (छां.४।१५।६) । ब्रह्मलोकमभिसंपद्यते । न च पुनरावर्तते (छां.८।१५।१) इत्यादिरूपस्तु ज्ञानिनां तामाह । न हि भक्तानां नाड्यादिप्रयुक्तममृतत्वम् । तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मन:। न ज्ञानं न च वैराग्यं प्राय: श्रेयो भवेदिह (भा.११।२०।३१) इत्यादिवाक्येभ्य: । किंतु यमेवेति श्रउतेर्वरणमात्रलभ्य: पुरुषोत्तम:। एवं सति ब्रह्मविदाप्नोति परम् (तै.२।१) इति श्रुतेर्विरोधपरिहारपूर्वकोक्तव्याख्यानरीत्या भक्तस्य परं ब्रह्म प्राप्तस्य निर्दोषत्वादावृत्तिहेत्वभावात् प्रपञ्चेनावृत्ति: संभवति । तादृशं प्रतीश्वरेच्छापि न तथा भवितुमर्हति । ये दारागारपुत्राप्तप्राणान् वित्तमिमं परम्। हित्वा मां शरणं याता: कथं तांस्त्यक्तुमुत्सहे (भा.९।४।६५) इति भगवद्वाक्यात् परप्राप्तिरूपत्वाच्च भोगस्य न नाशसंभावना । किंच यत्रैकस्यैव भक्तस्य देशकालभेदेनानेकविधलीलासंबन्धित्वेपि तत्तल्लीलासंबन्धित्वमनश्वरमुच्यते तत्र सर्वथा तदभाव: कथं वक्तुं शक्यो ब्रह्मणापि । अपरं च । कालसाध्यो हि नश्वर: स्याद् न हि पुरुषोत्तमे काल: प्रभवितुं शक्नोति । न यत्र कालोनिमिषां पर: प्रभु:। (भा.२।२।१७) इत्यादिवाक्येभ्य:। तथा च ज्ञानमार्गीयभक्तिमार्गीययोरनावृत्तौ तुल्यत्वेपि फलप्राप्तौ वैलक्षण्यात् । पूर्ववाक्येन भक्तानामाहानावृत्तिमुत्तरवाक्येन ज्ञानिनामिति ज्ञायते । न च फलप्रकरणान्तेनावृत्त्युक्ते: संसाराभाव एव जीवस्य परमं फलमित्याचार्याभिप्रायो ज्ञायत इति वाच्यम् । ब्रह्मविद: परप्राप्तिं फलत्वेनोक्त्वा तत्स्वरूपस्य सर्वकामभोगत्वेन श्रुत्या निरूपणात् स च स्वस्वाधिकारानुसारेण निवेदितार्थाङ्गीकाररूप एवेति ज्ञेयम् । तेन स एव परमं फलमनावृत्तिस्त्वार्थिकी । परं त्वावृत्तौ संभवत्यां परमफलत्वं नोपपद्यत इति

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

ज्ञानदुर्बलशङ्कानिरासायेयमुक्ता। विशेषप्रवर्तकनिवर्तकशब्दाद्भगवन्निकटगतावनावृत्ति: पूर्वेणाक्ता । मर्यादामार्गीयाणां वेदरूपाच्छब्दात्तदुक्तसाधनादनावृत्ति द्वितीयेनेत्यपि तात्पर्यविषय: श्लिष्टोर्थो ज्ञेय:। तथा सति परमफलमग्रे स्वत एव भावीति भाव इत्यलं विस्तरेण ॥४।४।२२॥५॥

जानीत परमं तत्त्वं यशोदोत्सङ्गलालितम् ।<br>
तदन्यदिति ये प्राहुरासुरांस्तानहो बुधा: ॥५८॥

नानामतध्वान्तविनाशनक्षमो<br>
वेदान्तहृत्पद्मविकासने पटु:।<br>
आविष्कृतोयं भुवि भाष्यभास्करो<br>
मुधा बुधा धावत नान्यवर्त्मसु ॥५९॥

पुरन्दरमदोद्भवप्रचुरवृष्टिसंपीडित-<br>
स्वकीयवरगोकुलावनपरायणो लीलया ।<br>
स्मितामृतसुदृष्टिभि: परिपुपोष तान्यो गिरिं<br>
दधार च स एव हि श्रुतिशिर:सु संराजते ॥६०॥

श्रीकृष्णकृपयैवायं सिद्धान्तो हृदि भासते ।<br>
तेनाधिकं वरीवर्ति न वक्तव्यं हरेर्नृणाम् ॥६१॥

भाष्यपुष्पाञ्जलि: श्रीमदाचार्यचरणाम्बुजे ।<br>
निवेदिस्तेन तुष्टा भवन्तु मयि ते सदा ॥६२॥

इति श्रीमद्वेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य चतुर्थ: पाद: ॥४।४॥

समाप्तश्चतुर्थोध्याय: ॥

***

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

# चतुर्थ अध्याय चतुर्थपाद
# संपद्याविर्भावाधिकरण

**'ब्रह्मविदाप्नोति परम्'** अर्थात् अक्षर ब्रह्म ज्ञानी को परब्रह्म की प्राप्ति होती है, इस प्रकार आरम्भकर उसके पश्चात् **'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'** अर्थात् यह ब्रह्म ज्ञानी भक्त मनोवांछित अनेक सुख पुरुषोत्तम के साथ रहकर प्राप्त करता है। इस प्रकार तैत्तिरीय उपनिषद में कहा है, इस संबंध में एक प्रश्न पैदा होता है कि भक्त भगवान् के हृदय में रहकर यह सुख भोगता है कि पुनर्जन्म लेकर ? इन दो पक्षों में दूसरे पक्ष को तो स्थान नहीं है, कारण कि जो इस प्रकार मानें तो **'न स पुनरावर्तते'** अर्थात् मुक्त जीवों को पुनः जन्म लेना नहीं पड़ता, यह वाक्य और इस प्रकार के दूसरे श्रुति वाक्य के साथ विरोध आता है, उपरान्त (पुर्नजन्म तो प्राचीन कर्म को लेकर होता है यह) कर्म भी इस तरह के जीवों के क्षीण हो गये होते हैं। (अर्थात् भगवान् में रहकर इस तरह भले ही सुख मानें, परन्तु) बाहर आकर इस प्रकार नहीं, इस तरह पूर्व पक्षी कहता है तो इसके उत्तर में सूत्रकार कहते हैं कि-

## संपद्याविर्भावः स्वेन शब्दात्।४।४।१।

सूत्रार्थ- सूत्रभाष्य-जीव को ब्रह्म प्राप्ति होने के पश्चात् भी, जो प्रभु परम कृपा विचार कर स्वरूपात्मक भजनानन्द का अनुभव इस जीव को कराने के लिये चाह करे तो यह जीव बाहर प्रकट होता ही है। यह जीव का प्राकट्य जीवकृत नहीं, परन्तु प्रभु की कृपा के कारण यह बतलाने के लिये **'आविर्भवति'** इस प्रकार का कर्तृ प्रयोग नहीं किया। पूर्वपक्षी के ऊपर कहा है कि **'न स पुनरावर्तते'** अर्थात् इस प्रकार का जीव पुनः जन्म नहीं लेता, इस प्रकार के श्रुति वाक्य के साथ विरोध और पुनर्जन्म में कारण भूत जो प्राचीन कर्म वे भी नहीं (इस प्रकार का युक्ति विरोध) इस तरह मानने में बाधक है इस प्रकार कोई कहे तो इसके उत्तर में 'सूत्रकार कहते हैं कि (स्वेन) स्व-शब्द का अर्थ यहां भगवान् है अर्थात् इस जीव का पुनः प्राकट्य भगवान् ने अपने सामर्थ्य से किया है। इसलिये **'न स पुनरावर्तते'** अर्थात् मुक्त जीव को लागू होता है। 'और यह जीव तो पुष्टिमार्गीय है। इसलिये विरोध का थोड़ा सा भी स्थान नहीं है, उपरान्त **'तेषामिहन् पुनरावृत्तिरस्ति'** अर्थात् इस प्रकार के जीवों का पुनः आगमन नहीं होता है। इसका अर्थ यह है कि लोक में पुनः नहीं आना पड़ता है, और लीला तो लोक से पर है। अर्थात् निषेध इसके लागू नहीं होता, इसलिये भी किसी प्रकार का विरोध नहीं, इस प्रकार मानने के लिये कोई कारण है ? तो इसके उत्तर में 'सूत्रकार-कहते हैं कि (शब्दात्) शब्द से (शब्द अर्थात् श्रुति) **'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'** अर्थात् विविध भोग चतुर पुरुषोत्तम के साथ रहकर मनोवांछित बहुत सुख भोगता है। यह श्रुति वाक्य सर्वकामोपभोग का वर्णन

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

करता है। और यह शरीर आदि संभव नहीं हो इसलिये इस श्रुति के बल से बहिः प्राकट्य स्वीकार

करना है । इस कथन के समर्थन हेतु दूसरा कारण निरूपण करते हैं ।

## मुक्तः प्रतिज्ञानात् ।४।४।२।

सूत्रार्थ–सूत्रभाष्य– 'आरम्भ में '**ब्रह्मविदाप्नोति परम्**' अर्थात् 'अक्षर ब्रह्म की प्राप्ति करता है इस प्रकार परब्रह्म की प्राप्ति रूप मुक्ति का निरूपण कर इसका ही विवरण 'सोऽश्नुते' आदि शब्दों में है, अर्थात् यह कामोपयोग पुष्टिमार्गीय मोक्षरूप है, अर्थात् यह बहिः प्राकट्य नहीं, लौकिक है या नहीं पुनर्जन्म रूप ।

अब कोई इस प्रकार की शंका करे कि ब्रह्म तो निर्गुण है और कामोपभोग गुण कार्य होने से (सगुण है) इसलिये (सह ब्रह्मणा) इस स्थल पर (ब्रह्मन्) पद का अर्थ सगुण ब्रह्म होता है अर्थात् यह स्थिति मोक्ष की नहीं, तो इसके उत्तर में सूत्रकार कहते हैं कि–

## आत्मा प्रकरणात्।४।४।३।

सूत्रार्थ–सूत्रभाष्य– इस स्थान पर (ब्रह्मन्) शब्द का अर्थ व्यापक उस प्रकार माया तथा इसके गुणों से पर जो परमात्मा वही होता है । ऐसा कैसे ? तो इसका उत्तर (प्रकरणात्) प्रकरण से है । '**ब्रह्मविदाप्नोति परम्**' अर्थात् अक्षर ज्ञानी परब्रह्म को प्राप्त करता है । इस प्रकार आरम्भ कर यह ऋचा क०ही गयी है अर्थात् निर्गुण परब्रह्म का ही यह प्रकरण है इसलिये यह निर्गुण ब्रह्म ही '**सह ब्रह्मणा विपश्चिता**' इस प्रकार का' इस (ऋचा खंड में) विवक्षित है, इस तरह समझना ।

अब कोई इस प्रकार आशंका करे कि 'ब्रह्मविदाप्नोति परम्' अर्थात् अक्षर ब्रह्मज्ञानी पर ब्रह्म को प्राप्त करता है– यह वाक्य अलग है और जिसमें '**सह ब्रह्मणा विपश्चिता**' यह अंश आता है वह यह ऋचा एक दूसरे से पृथक् है इसलिये प्रकरण एक नहीं इसलिये इस स्थल पर 'ब्रह्मन्' शब्द का अर्थ सगुण ब्रह्म ही है तो इसके उत्तर में सूत्रकार कहते हैं–

## अविभागेन दृष्टत्वात्।४।४।४

सूत्रार्थ–सूत्रभाष्य– यह ऋचा पूर्व के वाक्य को साथ रखकर कही है, नहीं कि इससे अलग, इसके लिये कारण क्या ? '**दृष्टत्वात् यह ब्रह्म विद् आप्नोति परम्**' इस वाक्य के पीछे (तद्) इस शब्द द्वारा आगे के वाक्य में आयी बात अब विस्तार से कहनी है, ऐसा निर्देश करने के पश्चात् यह ऋचा दी गयी है । इस संबंध में निरुपण स्पष्ट रीति से भी देना है, इसलिये वाक्य में जिसकी बात है उसके संबंध में ही यह ऋचा दी गयी है, इसलिये वाक्य में जिसकी बात है उसके संबंध में तो यह ऋचा दी गयी है। इसलिये इस ऋचा में निरुपित ब्रह्म 'निर्गुण ही है ऐसा समझना ।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

## ब्राह्मेणेत्यधिकरण-

पूर्व सूत्रों में मुक्त जीव भगवान् की अति कृपाभरी जो इच्छा उसको लेकर (भगवान् के हृदय में से) बाहर प्रकट होकर (निर्गुण परब्रह्म) जो पुरुषोत्तम उसके साथ मनः कल्पित सभी सुख भोगता है यह बात सिद्ध हो चुकी, वहां एक नया प्रश्न पैदा होता है कि बाहर प्रकट हुए ये जीव लौकिक शरीर द्वारा सुखों को भोगता है कि अलौकिक शरीर द्वारा ? अब भोगमात्र लौकिक है अर्थात् इसके आधारभूत शरीर भी लौकिक ही होने चाहिये ! इस प्रकार की मान्यता रखने वाले को उद्देश्य करके 'सूत्रकार कहते हैं कि –

## ब्राह्मेण जैमिनिरूपन्यासादिभ्यः।४।४।५।

सूत्रार्थ–सूत्रभाष्य– ब्रह्म  अर्थात् ब्रह्म  के साथ संबंध रखने वाले, अर्थात् भगवान् को अपने साथ शोभायमान करने में उपयोगी ऐसा सच्चिदानन्द रूप जो दिव्य शरीर दिया है उस द्वारा प्रस्तुत (सुख) भोगते है । इस प्रकार वेदान्ताचार्य जैमिनि का मत है, और इस विषय के कारण उपन्यास आदि है, (तैत्तिरीय उपनिषद् में) **'ब्रह्मविदाप्नोतिपरम्'** अर्थात् अक्षर ब्रह्म का ज्ञान जिसको होता है वह पर ब्रह्म की प्राप्ति करता है इस प्रकार अक्षर ब्रह्म ज्ञानी को पर ब्रह्म की प्राप्ति होती है इस प्रमाण से कहकर इसी बात का विस्तार उसके पीछे दी गयी ऋचा द्वारा किया जाता है जिसमें **'सोऽश्नुते'** आदि बात आती है अर्थात् परब्रह्म की प्राप्ति यह मुक्ति है और यह मुक्ति पुष्टिमार्गीय होती है । तब इसके स्वरूप ऋचा में वर्णन किया गया है उस तरह का होता है और अक्षरब्रह्म परब्रह्म जो पुरुषोत्तम उसका निवास स्थान है अर्थात् यह (पुरूषोत्तम के साथ रहने वाला) जीव का शरीर अक्षर ब्रह्म स्वरूप ही होता है नहीं कि प्राकृत यही बात युक्ति युक्त है, और इसी संबंध में स्पष्ट करने के पश्चात् अन्नमय आदि भगवद् विभूतियों का निरूपण किया गया है । इसका अर्थ यह है कि इस (प्रकार लीलास्थ) भक्त के शरीर में प्रतीत होने वाला (स्थूल सदृश) तत्व (वस्तु स्थिति से स्थूल नहीं, परन्तु) भगवद् विभूतिरूप होने से अक्षर ब्रह्मरूप है, और यही बात (सूत्रस्थ 'उपन्यास' शब्द के पश्चात्) जो आदि शब्द (जिसका अर्थ आदि होता है) उसके द्वारा इसको (उपन्यासादिभ्यः इस प्रमाण का) बहुवचन के प्रयोग द्वारा बताया गया है । यह बात (इस ग्रंथ के पहले अध्याय के पहले पाद में आये) आनन्दमयाधिकरण में विस्तार से समझायी गयी है अर्थात् यह पुनः कहने की आवश्यकता नहीं, जिस तरह कर्मागृही वेदान्ताचार्य जैमिनि जैसे भी इस प्रकार, अर्थात् मोक्षदशा में जीव का शरीर सच्चिदानन्द ब्रह्मस्वरूप होता है, इस प्रकार मानते है तो दूसरे इस प्रकार मानें इसमें क्या आश्चर्य, यह बतलाने के लिये इनके मत का यहां निरूपण किया है ।

## चिति तन्मात्रेण तदात्मत्वादित्यौडुलोमिः।४।४।६।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

सूत्रार्थ–जीवात्मा चैतन्यरूप है, अर्थात् चैतन्यस्वरूप परमात्मा में मिलकर यह केवल चैतन्य

स्वरूप से कामोपभोग करता है इस प्रकार वेदान्तचार्य औडुलौमि मानते है ।

सूत्रभाष्य- **'स यथा सैन्धवघनः अनन्तरः अबाह्यः कृत्स्नो रसघनः एवं वा अरे अयमात्मा अनन्तरः अबाह्यः कृत्स्नः प्रज्ञानघनः।'** अर्थात् सेंधव लवण का कंकर अखंड रस घन है, नहीं इसके अपने अन्दर और बाहर इस प्रकार का भेद इस प्रकार के श्रुति वाक्य जो 'घन' शब्द है उस द्वारा पर ब्रह्म का स्वरूप ज्ञानात्मक है ऐसा कहा है । जो ऐसा नहीं हो तो इस प्रकार कहने की कोई आवश्यकता नहीं, अर्थात् इस प्रकार के ही परब्रह्म के साथ रहकर कामोपभोग करने वाला जीवात्मा भी इसके जैसा ही होना चाहिये' अर्थात् चैतन्य स्वरूप परमात्मा में मिला जीव केवल चैतन्य स्वरूप से कामोपभोग करता है इसके लिये इसको किसी देह की आवश्यकता नहीं, कारण कि जीव को श्रुति में 'सशरीर' नहीं, परन्तु 'अशरीर' कहा गया है । भगवान् पूर्णानन्द है अर्थात् इसके संबंध में आकर इसके आनन्द स्वरूप का अनुभव केवल चैतन्य स्वरूप से करता है, कारण कि जीव स्वभाव से चैतन्य स्वरूप है, ऐसा वेदान्ताचार्य औडुलौमि मानते हैं 'अब कोई ऐसी आशंका करें कि **'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृषतः'** अर्थात् जीव मोक्षदशामें शरीर बिना होकर क्या अच्छा क्या बुरा इसको इस दशा में अनुभव नहीं होता, तो इसके उत्तर में भाष्यकार कहते है कि- यह **'अशरीरं वाव'** श्रुति जिस पर कृपा करने का विचार करती है और जिसको सर्वकामोपभोग कराती है उसके संबंध में है, ऐसा समझना, कारण कि मोक्ष दशा में इस प्रकार के जीव को इस तरह का सर्वकामोपभोग हो ऐसी इच्छा भगवान् की नहीं होती, इसलिये इसको इस प्रकार का अनुभव भी नहीं होता अर्थात् **'सोऽश्नुते सर्वान् कामान्'** इस श्रुति वाक्य में जो (काम) शब्द है उसका अर्थ भगवदिच्छा है, 'अर्थात् भगवान् ये मुक्त जीव को जो सुख देने की इच्छा करते हैं वह सुख इस जीव को मिलता है ।

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः।४।४।७

सूत्रार्थ-(परन्तु परमवेदान्तचार्य) बादरायण व्यास, (औडुलौमि) नाम के वेदान्ताचार्य ने जो ऊपर के सूत्रानुसार) जो विरोध (बताया उसे) स्वीकार नहीं करते, कारण कि इस प्रकार भी 'अर्थात् पुष्टिमार्गीय जीव को मोक्षदशा में भी सर्वकामोपभोगानुरूप देह होता है इस प्रकार भी श्रुति में, निरुपण है, (इतना ही नहीं, परन्तु इस तरह के दिव्य देह इस लीला स्थल में) पहले से तैयार ही होते है ।

सूत्रभाष्य-परम वेदान्ताचार्य बादरायण व्यास इन औडुलौमि आचार्य का मत स्वीकार नहीं करते हैं, कारण कि जिस तरह **'ब्रह्मविदाप्नोति परम्'** (तै.२।१) अर्थात् अक्षर ब्रह्म ज्ञानी अक्षर ब्रह्म की प्राप्ति कर केवल चैतन्य स्वरूप में परमानन्द का अनुभव करते हैं । यह कथन जिस प्रकार निरूपण किया है उसी प्रकार 'पुष्टिमार्गीय जीव को सर्वकामोपभोगानुरुप देह भी (लीलास्थल में) मिलती है ऐसा निरूपण मिलती है, ऐसा निरुपण श्रुति में है कारण कि **'यो वेद निहितं गुहायाम्'** अर्थात् जो गुहा अर्थात् हृदयाकाश तो जो देह हो तो ही संभव है । **'टिप्पणी-सूत्रकार बादरायण** औडुलौमिके मत को

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

आंशिक स्वीकार करते हैं औडुलौमि इस प्रकार मानते हैं कि मोक्ष दशा में सर्वत्र जीवात्मा अशरीर होता है और केवल चैतन्य स्वरूप ही परमानन्दानुभव करता है । सूत्रकार ऐसा कहते हैं कि अक्षर ब्रह्म ज्ञानी की बात इस संबंध में यह बात सत्य है, परन्तु भगवल्लीलास्थ जीव के संबंध में यह बात सत्य नहीं है, इसको तो सच्चिदानन्द स्वरूप दिव्य देह होती ही है, अब विशेष कहने का यह है कि '**ब्रह्मविद् आप्नोति परम्**' इस वाक्य में 'ब्रह्मविद्' यह प्रयोग । प्रथमा विभक्ति में है और 'आप्नोति' यह कर्तरि प्रयोग है, अर्थात् पुरुषोत्तम प्राप्ति पश्चात् (जीव को एक प्रकार का) स्वातन्त्र्य प्राप्त होता है ऐसा ज्ञात होता है, और इसी संबंध में निरूपण 'ब्रह्मणासह' इस शब्द द्वारा भी है ।

'**टिप्पणी** - 'सह' शब्द जिसके साथ जुड़ा हो वह गौण और प्रथमान्त अथवा द्वितीयान्त होता है वह मुख्य, दृष्टान्त, '**रामः लक्ष्मणेन सह आगच्छति**' अर्थात् राम लक्ष्मण के साथ आता है उसमें मुख्य आने वाला राम है और '**द ध्ना सह ओदनं भुंक्ते**' अर्थात् यह दही के साथ भात खाता है उसमें मुख्यता भात की है । अर्थात् जो जीव कर रहा है वह प्रभु भी कर रहे हैं, परन्तु यह प्राकृत नहीं है, परन्तु अप्राकृत, उस प्रकार और '**विपश्चिता**' इस प्रकार ब्रह्म का जो विशेषण इस ऋचा में है उसके द्वारा ऐसा सूचन होता है कि भगवान् को अनेक विध विषयों का ज्ञान है, इतना ही नहीं, यह महान् चतुर भी है, अब कामोपभोग के संबंध में जब यह बात कही गयी हो तब तदुपयोगी सभी वहां है इस प्रकार समझ लेना, अर्थात् भक्तों के हृदय में जागते भिन्न भिन्न भावों की भगवान् को पूरी-पूरी जानकारी उस तरह की बनती है । इतना ही नहीं, उन उन भाव से किस प्रकार संतोष करना, और साथ ही साथ किस भांति इसका रसास्वाद करवाना और करना इस बात में भगवान् निपुण है ऐसा समझना, इस संबंध से भी भक्तों के देह होती है यह बात सिद्ध होती है । अब कोई इस प्रकार की आशंका करे कि देह तो बाहर से आयी एक वस्तु है अर्थात् लौकिक है और परब्रह्म तो अलौकिक है तो 'अलौकिक देह से अलौकिक ब्रह्म के साथ कामोपभोग' (किस रीति से संभव ?) यह एक बाधा युक्त बात है, तो इसके उत्तर में सूत्रकार कहते हैं कि 'पूर्वभावात्' अर्थात् इस तरह के दिव्य देह तो पहले से ही लीला में तैयार ही होती है । जीव को भगवत्प्राप्ति हो इसके पूर्व ही भगवान् को जो सुख का अनुभव कराने का विचार किया है तदनुरूप यह दिव्य देह तैयार ही होती है अर्थात् बाधा जैसा कुछ भी नहीं, उपरान्त प्रस्तुत श्रुति वाक्य और सूत्रों से भगवान् के साथ भक्त की जो कामोपभोग की बात है वह कामोपभोग की जिन-जिन वस्तुओं के बिना नहीं संभव वे सभी वस्तुएं भी लीला में है ऐसा श्रुति मानती इस प्रकार अपने को मानना ही पड़ता है । इसलिये जो शरीर द्वारा ब्रह्म के साथ विलास हो रहा है वे सभी शरीर भी नित्य ही है । भगवान् ने जीव पर जिस प्रकार की कृपा का विचार किया हो तदनुरूप इस शरीर में प्रवेश कर भक्त इस प्रकार के सुख का अनुभव करता है आदि आदि सभी संबंध सीधे साधे है इस प्रकार की भगवत्प्राप्ति किसी को ही होती है (सभी को नहीं) इसका कारण क्या, इस प्रकार कोई जानना चाहता हो तो इसके उत्तर में (सूत्रकार) कहते हैं ।

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

## संकल्पादेव च तच्छ्रुतेः।४।४।८।।

सूत्रार्थ-सूत्रभाष्य- (प्रभु) मुझे इस जीव को भजनानन्द का दान करना है, इस प्रकार विचार करे उसी जीव को इस प्रकार की भगवत्प्राप्ति हो, इसके लिये कारण भगवान् का इस प्रकार का विचार ही (समझना) इस विषय में प्रमाण का निरूपण (सूत्रकार) (तच्छ्रुतेः) अर्थात् इस प्रकार का श्रुति वाक्य है इस रीति से करते हैं।**'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुनाश्रुतेन। यमेवैष वृणुते तेन लभ्य स्तस्यैष आत्मा वृणुते तनुं स्वाम् ।।'** अर्थात् इस परमात्मा की प्राप्ति बड़ी बड़ी बातें करने से नहीं होती, अपनी बुद्धि से नहीं होती, उसी प्रकार शास्त्र पढ़ने से नहीं, जिस जीव पर प्रभु कृपा करे उसको ही प्रभु प्राप्ति होती है, इस जीव को प्रभु अपना अंग मानते है । 'जिस प्रकार पति पत्नी को अपना ही अंग मानता है' श्रुति वाक्य में प्रवचन आदि को अकिंचित्कर कहा है इसी बात का सूचन सूत्रस्थ (एव) शब्द से है । उपरान्त सूत्रस्थ (च) शब्द जिसका अर्थ (भी) होता है उस द्वारा भगवत्कृपा द्वारा जागी भगवत्प्राप्ति के लिये भक्त की जो उत्कट इच्छा उसे भी भगवत्प्राप्ति में कारण भूत समझना ।

## अत एव चानन्याधिपतिः।४।४।९।

सूत्रार्थ-सूत्रभाष्य- कारण कि इस भांति साधन रूप और फलरूप भगवान् स्वयं ही बने हैं, और दूसरे कोई नहीं, इसलिये ऐसे भक्तों के हृदय में साधन रूप और फलरूप से स्वयं ही प्रतीत होते हैं, दूसरे कोई नहीं, इसलिये इनको (अनन्य) कहा जाता है और इनका स्वयं स्वामी प्रभु हैं इसका अर्थ यह है कि इस तरह के (अनन्य) भक्तों का मनोरथ भगवान् स्वयं परिपूर्ण करते है, जब दूसरे भक्तों के मनोरथ भगवान् अपनी विभूति द्वारा पूर्ण कराते है । भगवान् को जो श्रुति सर्व के स्वामी के समान वर्णन करती है वहां भी विवेक ही रखने का है । **'टिप्पणी-** स्वयं और विभूति द्वारा इन दोनों के बीच का भेद समझने जैसा है । एक बड़ा व्यापारी हो और इसका बड़ा व्यापार चलता हो, व्यापार संबंधी सभी काम स्वयं नहीं करता, करने की सोचे तो अमुक अंश में अमुक कार्य भी कर सकता है । ऐसा होने पर भी यह कार्य स्वयं नहीं करता, मनुष्य रखकर अपना अधिकार इसको देकर उससे कराता है। व्यापार संबंधी सौदा बिचोलिये द्वारा, जमा खर्च मुनीम द्वारा, मकान की साफ-सफाई नौकरों द्वारा आदि आदि में बिचोलिये मुनीम और नौकर हुए व्यापारी की विभूतियां, व्यापार अंग पृथक् पृथक् मनुष्य मिलने आते हैं उनसे इनके संबंधित कार्य उसी प्रकार की विभूति द्वारा पूरा हो, व्यापारी को इसकी सूचना भी नहीं होती है, और इस तरह का व्यक्ति एक समय व्यापारी के पास आवे तो व्यापारी के आते ही इसके कार्य को नहीं करता है, परन्तु अपने नौकर के पास इसको भेजकर इसके द्वारा इसका काम कराता है । परन्तु कितने ही लोक व्यापारी के स्नेह संबंध के कारण मिलने आते हैं । उनसे तो स्वयं जाते ही मिलता है, इनको किसी बिचोलिये अथवा मुनीम के पास नहीं भेजता है । भगवान् के संबंध

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

में भी ऐसा ही समझना । भक्तों के कार्य भगवान् स्वयं ही करते हैं, जब दूसरों के काम भगवान् अपनी विभूतियों अर्थात् दूसरे देवों द्वारा कराते है । (उस प्रकार और) इस प्रकार जिसका अर्थ होता है वे सूत्रस्थ (च) शब्द द्वारा '**मदन्यत् ते न जानन्ति नाहं तेभ्योमनागपि** अर्थात् मेरे अतिरिक्त ऐसे अनन्य भक्तों को दूसरों का अनुसंधान नहीं रहता और मुझे ऐसे भक्तों के अतिरिक्त दूसरों का अनुसंधान नहीं रहता है, यह वाक्य भी साथ साथ समझ लेना, इस प्रकार (भक्तों के कार्य स्वयं और दूसरों के कार्य विभूति द्वारा इस प्रकार) नहीं समझे तो सर्वज्ञ और जिसकी ज्ञान शक्ति अप्रतिहत है वे प्रभु इस प्रकार कहे क्यों ? मेरे भक्त मेरे अतिरिक्त दूसरों का कुछ भी अनुसंधान नहीं ? इससे इनकी उक्ति का अन्यथा मेल नहीं बैठता है, अर्थात् समझने का यह है कि पुष्टिमार्ग का समग्र आधार भगवान् की कृपा के ऊपर है यह (साधन साध्य) मर्यादा मार्ग से अलग ही है, और पुष्टिमार्ग में विश्वास के संबंध में भी इस प्रकार ही समझना है । मुक्त हुई आत्मा को भी प्रभु कृपा कर पुष्टि मार्ग में अंगीकार करे तो इसको दिव्य देह उसी तरह भजनानन्द प्राप्त होता है यह बात सिद्ध हो चुकी है, अब इस संबंध में एक वेदान्ताचार्य का विरोध है (जो नीचे कहे अनुसार है) ।

## अभावं बादरिराह ह्येवम्।४।४।१०

सूत्रार्थ-सूत्रभाष्य- वेदान्तातचार्य बादरि मुक्त आत्मा को देह आदि नहीं होता ऐसा मानते हैं और अपनी इस मान्यता के लिये कारण नीचे प्रस्तुत करते हैं । ब्रह्म ज्ञानी को मुक्ति मिलती है यह बात श्रुति में कही है । '**यत्र हि भवति तदितरः इतरं पश्यति**' अर्थात् जिस तरह द्वैत अर्थात् भेदभाव जैसा होता है वहां एक दूसरा एक दूसरे को देख सकता है, इस प्रकार आरम्भ कर '**यत्र त्वस्य सर्वमात्मैवाभूति तात् केन कं पश्येत्**' अर्थात् जहां सभी एकाकार आत्मा ही हो गया हो वहां (कौन) किसके द्वारा किसको देखे ? इस प्रकार ब्रह्म ज्ञानी को दूसरी वस्तु का ज्ञान नहीं होता इस प्रकार श्रुति ने कहा है, तब फिर कामोपभोग की बात तो दूर रही, और जिसके बिना यह (कामोपभोग) संभवनहीं, उस देह की (बात) तो इससे भी दूर रहती है ।

## भावं जैमिनिर्विकल्पामननात् ।४।४।११

सूत्रार्थ-सूत्रभाष्य-वेदान्ताचार्य जैमिनि मुक्त हुए आत्मा के भी देह होती है ऐसा मानते हैं, इसके लिये कारण, सूत्र के 'विकल्पामननात्' इस अंश में है '**ब्रह्मविदाप्नोति परम्**' अर्थात् ब्रह्म ज्ञानी को पर प्राप्ति होती है । इस श्रुति वाक्य में मुक्ति प्राप्त करने के साधन का निरूपण है । 'नायमात्मा' अर्थात् यह परमात्मा (दूसरे साधन से नहीं) 'परन्तु इसकी कृपा द्वारा ही प्रभु प्राप्त होता है ऐसा है । इस वाक्य द्वारा ही प्रभु प्राप्त हो ऐसा कहा है, और '**सोऽश्नुते**' अर्थात् ये 'मुक्तात्मा परब्रह्म के साथ रहकर सर्वकामोपभोग प्राप्त करता है। इस वाक्य में परब्रह्म प्राप्ति के पीछे की स्थिति का निरूपण किया गया है, उस प्रकार फिर '**इहैव समवलीयन्ते, ब्रह्मैव सन् ब्रह्माप्येति**' अर्थात् इस प्रकार की मुक्तात्मा की

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

इन्द्रियां सभी यहां ही लीन हो जाती है, ब्रह्म बनकर ब्रह्म में लीन होती है इस प्रकार भी श्रुति में कहा है, इस भांति परस्पर विरोध प्रतीत होने पर यह दूर करने के पहले जिस प्रकार कहा है तदनुसार ज्ञानी को ब्रह्म ज्ञान द्वारा अक्षर ब्रह्म की प्राप्ति और पुष्टि भक्त को '**सोऽश्नुते**' अर्थात् यह मुक्तात्मा परब्रह्म के साथ में सर्वकामोपभोग करता है । इस वाक्य में परब्रह्म की प्राप्ति के पीछे की स्थिति का निरूपण है । इस प्रकार का व्यवस्थित विकल्प श्रुति को इष्ट है ऐसा लगता है । '**टिप्पणी**- शास्त्रों में ये दो बात आती है (१) '**मा हिंस्याः सर्वाणि भूतानि**' और (२) '**वैदिकी हिंसा हिंसा न भवति**' एक बात में ऐसा कहा है कि किसी प्राणी की हिंसा नहीं करनी, दूसरी बात में ऐसा कहा है कि वेद विहित हिंसा करने में दोष नहीं है, दूसरी बात का पहली बात के साथ स्पष्ट विरोध दूर करने के लिये ऐसा मानिये कि संन्यासी को एक भी प्राणी की हिंसा नहीं करनी और गृहस्थ को हिंसा करने का प्रसंग पैदा होता है तो इसको ऐसे करने से पहले देखना चाहिये कि यह हिंसा शास्त्रविहित है कि नहीं, '**आग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः, क्षेत्रदारहरश्चैव षडेते आततायिनः।**' अर्थात् आग लगाने वाला, विष देकर मार डालने वाला, मार डालने की वृत्ति से शस्त्र उठाने वाला, धन क्षेत्र और स्त्री को ले जाने वाला इन छः आततायी के लिये शास्त्र में कहा है कि '**आततायिनमायान्तं हन्यादेवाविचारयन् ।**' अर्थात् इन छः आततायियों जहां देखो वहीं मारना । संन्यासी से तो इस प्रकार की हिंसा भी नहीं हो सकती है इसका नाम व्यवस्थित विकल्प इसका अर्थ यह हुआ कि '**सोऽश्नेतु**' इस प्रकार का श्रुति वाक्य । जिसको पर ब्रह्म पुरुषोत्तम प्राप्त हुए हैं उस प्रकार के पुष्टिमार्गीय जीव के संबंध में है, जब 'इहैव' इस तरह का वाक्य मर्यादामार्गीय जीव के संबंध में है । इस प्रकार पुष्टिमार्गीय जीव का कामोपगोगोपयोगी दिव्य देह होती है यह बात निश्चित हुई । '**तत् केन कंपश्येत्** ' आदि अद्वैत बोधक श्रुति ब्रह्म ज्ञान जिस समय होता है उस समय की स्थिति का वर्णन करती है, नहीं कि उसके पश्चात् परब्रह्म पुरुषोत्तम प्राप्त हो उस समय की स्थिति के लिये इस संबंध में बिना युक्ति का क्या है ?

## द्वादशाहवदुभयविधं बादरायणोऽतः।४।४।१२।

सूत्रार्थ- इस तरह का समर्थन करने वाली श्रुति के आधार पर परमवेदान्ताचार्य बादरायण व्यास जिस प्रकार द्वादशाह नामका याग 'अनेक कर्तृक होने से 'सत्र' भी है और एक कर्तृक होने से 'अहीन' भी है इस प्रकार से दोनों प्रकार का हैं, उसी तरह 'लीला शरीर पंचमहाभूतजन्य नहीं होने से शरीर नहीं यह बात भी सत्य और कामोपभोग में साधनभूत होने से शरीर है यह बात भी सत्य है इस रीति से, दोनों प्रकार का है।

सूत्रभाष्य- परब्रह्म के साथ रही (पुष्टिमार्गीय मुक्तात्मा) जो सर्वकामोपभोग करती है 'उसमें साधनभूत शरीर है, अब सामान्य नियम यह है कि शरीर मात्र (पंचमहाभूत) (आकाश, वायु, अग्नि, जल और पृथ्वी) में से तैयार होते हैं । परन्तु (यह लीला शरीर) इस प्रकार नहीं बना हुआ होता है इसलिये यह शरीर नहीं (यह बात भी सत्य और यह पुष्टिमार्गीय मुक्तात्मा) इस लीला शरीर की
CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

